

# चन्दमामा

फेब्रवरी -१९९७



## अन्तरङ्गम्






प्रतिकृतिमूल्यं रू. ६-००

वार्षिकं ग्राहकशुल्कं रू. ७२-००

**कविहृदयम् -**

# वार्धक्यम् अनुभवादिभिः भूषणीयम्

अलङ्करोति हि जरा राजामात्यभिषग्यतीन् ।
विडम्बयति पण्यस्त्रीमल्लगायनसेवकान् ।।

जरा नाम वार्धक्यम् । तच्च वार्धक्यं राजा, मन्त्री, वैद्यः, यतिः इत्यादीनां भूषणं भवति । किन्तु तदेव वार्धक्यं वेश्या, मल्लः, गायकः, सेवकः इत्यादीनां दूषणाय भवति ।

लोके केचन शरीरबलेन जीवन्ति । पुनः केचन बुद्धिबलेन जीवन्ति । वार्धक्ये सहजतया शरीरं बलहीनं भवति । अतः शरीरबलात् ये जीवन्ति ते वार्धक्ये दुर्बलाः भवन्ति । बुद्धिबलेन ये जीवन्ति तेषां वार्धक्यं भूषणम् । यतः, यथा यथा वर्षाणि अतीतानि भवन्ति तथा तथा अनुभवः वर्धते । अनुभव-वर्धनात् च बुद्धिबलजीविनां कार्यम् उत्तमं भवति । एकैकं वचनम् अपि अनुभवबलात् निर्गतं सत् हिताहितविवेचनेन युक्तं सत् लाभकारकं भवति ।

वयं जीविकार्थं शरीरबलाधारितां बुद्धिबलाधारितां वा काञ्चित् वृत्तिम् अवलम्भितवन्तः स्याम । तथापि अस्माकं जीवने सामाजिकः व्यावहारिकः च कश्चन भागः भवति एव, यत्र च अनुभवस्य विवेचनस्य च विशेषप्राधान्यं भवति । लोकसङ्ग्रहशीलता, लोकोपकारः इत्यादयः गुणाः अपि अस्माकं जीवने योजयितुं शक्याः । अत्रापि अनुभवस्य विवेचनस्य चापि प्राधान्यं भवति । अतः एतादृशक्षेत्रेषु यदि वयम् आत्मानं प्रवर्तयामः तर्हि गच्छता कालेन अस्माकम् अनुभवः विवेचनशक्तिः च वर्धते । अस्माकं वचनतः अन्ये लाभान्विताः भवन्ति ।

वार्धक्यं सर्वेषां जीवनस्य अपरिहार्यम् अङ्गम् । तत् जीवने यथा न भारायेत तथा करणीयं चेत् तारुण्ये एव अस्माभिः योजना करणीया । वार्धक्यकाले अनुभवः विवेचनशक्तिः च यथा सञ्चितः भवेत् तथा प्रयत्नः करणीयः । अन्यथा वार्धक्यं भारायते, व्यथाजनकं च भविष्यति । वार्धक्ये दिनानां यापनं कथम् इत्येव महती समस्या भवेत् । यदि वार्धक्यम् अनुभवादियुक्तं न स्यात् तर्हि कनिष्ठाः वार्धक्यवतः पोषणं भारजनकं भावयन्ति, तस्मिन् अनादरं च प्रकटयन्ति ।

अतः वार्धक्यम् अनुभवादिभिः भूषणीयम् । तदा तत् अस्मान् भूषयति ।

**PolioPlus**



# IMMUNIZATION AN ASSURANCE OF GOOD HEALTH TO CHILDREN

## VACCINATIONS When and How Many

| Age to Start Vaccination | Name of Vaccine | Name of Disease | How Many Times |
|---|---|---|---|
| Birth | **BCG** | **Tuberculosis** | Once |
| 6 weeks | **Polio** | **Polio** | Three times with intervals of at least one month |
| 6 weeks | **DPT** | **Diphtheria Pertussis (Whooping Cough) Tetanus** | Three times with intervals of at least one month |
| 9 months | **Measles** | **Measles** | Once |

**Babies should receive all vaccinations by the time they are twelve months old.**

Pregnant women should get themselves vaccinated against Tetanus (TT) twice—in an interval of at least one month—during the later stages of pregnancy.

**HEALTHY CHILD—NATION'S HOPE & PRIDE**

Design courtesy : World Health Organisation




# चन्दमामा

संस्थापकः - **'चक्रपाणिः'** सञ्चालकः - **'नागिरेड्डी'**

## अलं दारुणेन उपहासेन



विद्यार्थिक्षेत्रे 'परीक्षा'शब्दः प्रायः भयावहः भवति । किन्तु तत्क्षेत्रे इदानीं भयावहः अन्यः अपि शब्दः श्रूयते 'र्यागिङ्ग' इति । पूर्वं यत् एतत् पदं सामान्यम् उपहासं द्योतयति स्म, तदेव इदानीं निन्दनीयतां खण्डनीयतां तिरस्कारार्हतां च गतम् अस्ति ।

ज्येष्ठाः विद्यार्थिनः नवागतानां कनिष्ठविद्यार्थिनाम् उपहासं यत् कुर्वन्ति तदेव 'र्यागिङ्ग नाम' इति वदति शब्दकोषः । प्रतिवर्षं विद्यालयेषु नूतनविद्यार्थिनां प्रवेशः भवति । नूतने परिसरे आत्मानः समायोजने, ज्येष्ठविद्यार्थिभिः सह मैत्र्या व्यवहारे च नूतनाः समयसाहाय्यम् अपेक्षन्ते सहजतया । तत्काले नूतनानां सङ्कोचशीलतायाः अपनयनार्थं ज्येष्ठविद्यार्थिनः र्यागिङ्ग आरभन्ते । गच्छतः छात्रस्य उत्तमवस्त्राणाम् उपरि द्रोणीपरिमितस्य जलस्य पातनम्, मध्यरात्रे उपधानेन निद्रायां निलीनस्य मुखस्य पिधानं कृत्वा श्वासोच्छ्वासस्य अवरोधनम् इत्यादयः र्यागिङ्गक्रमेषु अन्यतमाः । क्वचित् हास्योत्पादकवेषः धरणीयः इति नर्तनं करणीयम् इति वा कनिष्ठां सनिर्बन्धम् आज्ञापयन्ति ज्येष्ठाः छात्राः । हास्योत्पादकानि एतानि कृत्यानि एकतां समानतां पारस्परिकसम्बन्धं च दृढीकरोति इति चिन्तयन्ति ज्येष्ठविद्यार्थिनः ।



किन्तु एतादृशकृत्यानि दारुणतां गतानि सन्ति । एतां पीडाम् असहमानाः केचन विद्याभ्यासम् एव परित्यक्तवन्तः, पुनः केचन अवमानभरेण लज्जिताः सन्तः आत्महत्यां कृतवन्तः । तमिळुनाडुराज्ये एतस्य कृत्यस्य परिणामः मारणहेतुः जातः अपि ।

एतस्य सर्वस्य कारणतः सर्वकारः, शिक्षणवेतारः, पोषकाः, विद्यार्थिनः, विद्यासंस्थाः च एतद्विषये चिन्तनम् आरब्धवन्तः । र्यागिङ्गकर्मणि उद्यतानां निग्रहार्थं दण्डनार्थं च राज्यसर्वकारैः नियमाः विहिताः । इदानिं तु समग्रे देशे एवं हि जनघोषः श्रूयते यत् तादृशानां प्राणाघातप्रवृत्तिमतां छात्राणां निग्रहार्थं कठिननियमः करणीयः इति । किं विद्यालयीयपरिसरः यथापूर्वं निर्मलः भवेत् ? किं विद्यार्थिनां मध्ये मैत्री जागरिता तिष्ठेत् ।

सम्पुटः - १३ फेब्रवरी - १९९७ सञ्चिका - ११

प्रतिकृतिमूल्यं रू. ७.०० * वार्षिकं ग्राहकशुल्कं रू. ७२.००



# कठिनशब्दानां सान्दर्भिका: अर्था:

| | | | | | |
|---|---|---|---|---|---|
| अङ्गारः | - | charcoal | पाषाणायते | - | stone hearted |
| अवचिनोति | - | pluck | पुच्छम् | - | tail |
| अहितुण्डिकः | - | a snake charmer | भित्तिः | - | wall |
| आधिरूपेण | - | pawn | भ्राष्ट्रम् | - | a frying pan |
| उपधानम् | - | pillow | मद्यपः | - | drunkard |
| उपायनम् | - | gift | मार्गभ्रष्टः | - | way ward |
| ऊषरभूमिः | - | barnland | मौक्तिकम् | - | pearls |
| कनकवृष्टिः | - | rain of gold | यमलौ | - | twins |
| करण्डकः | - | a small box | यवनमन्दिरम् | - | mosque |
| | | made of bamboo | राङ्कवम् | - | shawl |
| कौशेयशाटिका | - | silk saree | लुण्ठितवन्तः | - | plundered |
| कृपणः | - | miser | वणिक् | - | merchant |
| गर्तः | - | a pit | वलिरा | - | squint eyed |
| जामाता | - | son-in-law | विपत्तिः | - | difficulty |
| झटिति | - | quickly | विप्रतिपत्तिः | - | differnce of |
| तप्तः | - | burn (out of | | | opinion |
| | | jealousy) | व्रीहिस्यूतः | - | bag of paddy |
| त्वरा | - | to hurry | शलाका | - | rod |
| दृप्तः | - | wild | शाठ्यम् | - | cheat |
| धूमनालः | - | chimney | शृगालः | - | fox |
| पराहता | - | vanquished | शोथः | - | swelling |
| पर्यङ्कः | - | cot | | * * * | |

वार्ताविशेषः -

# सर्वेषां निमित्तम् आहारः

नवम्बर्मासे इटलिराजधान्यां रोमनगरे पञ्चदिनात्मिका प्रपञ्च-आहारमहासभा प्रवृत्ता । एतस्यां महासभायां सामान्यतः १९० देशेभ्यः प्रतिनिधयः आगताः आसन् । ४० देशेभ्यः देशाध्यक्षाः, अन्येभ्यः ४० देशेभ्यः प्रधानमन्त्रिणः, अवशिष्टदेशेभ्यः प्रतिनिधयः च आगत्य एतस्यां सभायां भागम् अवहन् ।

समग्रप्रपञ्चे एव बुभुक्षा निवारणीया इति विचारे कस्यापि भिन्नाभिप्रायः न आसीत् । परन्तु "तत् कार्यं कदा भविष्यति ?" इत्येतस्मिन् विषये सभायां केचन भिन्नाभिप्रायं प्रकटितवन्तः । "२००० तमवर्षस्य जनवरिमास-समाप्तिसमये प्रपञ्चे कोऽपि बुभुक्षया पीडितः न भवेत्" इति अस्माकं देशस्य प्रधानमन्त्री श्री देवेगौडमहोदयः स्वाभिप्रायं प्रकटितवान् । तन्नाम वर्षत्रयाभ्यन्तरे एव बुभुक्षायाः चित्रम् एव परिवर्तनीयम् इति सः प्रपञ्चनायकान् उक्तवान् अस्ति ।

"सर्वेषाम् अपि बुभुक्षा निवारिता भवेत् । उदरपूरणं सर्वेषां जन्मसिद्धः अधिकारः भवेत्" इति रोम्समावेशे निश्चितं जातम् । सद्यः प्रपञ्चे सामान्यतः ८४ कोटिजनाः बुभुक्षया पीडिताः सन्ति । अग्रिमवर्षेषु एषा सङ्ख्या न्यूनीकरणीया इति सभायां निश्चितम् । २२ वर्षेभ्यः पूर्वं प्रवृत्ते समावेशे अपि एषः निर्णयः स्वीकृतः आसीत् । किन्तु अनन्तरकाले कोऽपि परिणामः न दृष्टः । बुभुक्षया म्रियमाणानां सङ्ख्या न्यूना न जाता । एतत् तु कटुसत्यम् अस्ति । एतस्य निर्णयस्य अनुसारम् अर्धांशजनानां बुभुक्षा निवार्यते चेदपि अवशिष्टानां ४२ कोटिजनानां का गतिः भवेत् ? एतस्य उत्तरं तु न लभ्यते एव ।

इदानीम् आहारस्य अभावार्थं कारणानि कानि इति यदा चिन्तयामः तदा बहूनि कारणानि दृष्टिपथम् आयान्ति । आवश्यकतानुगुणं फलोदयाः न वर्धिताः, वर्धितानां फलोदयानां सम्यग्रीत्या वितरणं न कृतम् इत्येतत् उभयम् अत्र प्रमुखं कारणम् । जनसङ्ख्यावर्धनम् अपि अपरं प्रमुखं कारणं भवति ।

अस्माकं सर्वकारेण न्याय्यमूल्येन आपणानां द्वारा रेषन्कार्ड दत्त्वा आहारः वितीर्यमाणः अस्ति । आर्थिकदृष्ट्या येषां कष्टम् अस्ति तेषां निमित्तम् अस्ति एषा योजना । एषा व्यवस्था अपि सर्वैः न प्राप्यते इति तु सर्वैः ज्ञातः विषयः ।




आहारवस्तूनि व्यर्थीकुर्वन्ति बहवः । एतत् अपि आहार-न्यूनतायाः कारणं भवति । येषु उत्तमरीत्या फलोदयाः भवन्ति तादृशदेशेषु मूल्यह्रासस्य निवारणार्थं सर्वकाराः वाणिज्यसंस्थाः वा आहारधान्यं समुद्रे क्षिपन्ति ।

रोम्समावेशे एतत् सर्वं सम्यक् पर्यालोचितम् । परन्तु एतत् अनुरोधपूर्वकं निवारयितुं तु न शक्यते । अतः सर्वेषां यदि आहारः आवश्यकः तर्हि एतस्य ध्येयस्य निमित्तं सर्वकारेण सह प्रपञ्चस्य सर्वाभिः प्रजाभिः अपि प्रयत्नः करणीयः । एतस्मिन् समये अस्माभिः निर्णयः स्वीकरणीयः यत् सर्वैः अपि आहारः लभ्येत इति । अतः अस्माभिः आहारः न व्यर्थि- करणीयः । धनिकैः निर्धनानां साहाय्यं करणीयम् । बुभुक्षां निवारयितुम् अस्माभिः सर्वैः बद्धकटिभिः भवितव्यम् ।



# करण्डकपिशाचः

सीतारामः मद्यपः आसीत् । मद्यपाननिमित्तं सः स्वक्षेत्रं, गृहं च विक्रीतवान् आसीत् । अनारोग्यकाले उत्तमस्य औषधोपचारस्य अभावात् तस्य पत्नी दिवं गता आसीत् । स्वस्य एकमात्रपुत्रं राजीवं भूस्वामिनः गृहे दासत्वेन नियोजितवान् आसीत् सीतारामः । भूस्वामी सीतारामाय मद्यपानार्थं प्रतिदिनं धनं ददाति स्म ।

एकदा सीतारामः अपि दिवं गतः । राजीवः पितुः अन्त्यक्रियां समाप्य भूस्वामिनः समीपं गत्वा - "स्वामिन् ! एतावत्पर्यन्तं भवता कृतं साहाय्यं सर्वदा अहं स्मरामि । मम मातापितरौ दिवङ्गतौ । इदानीम् अहम् अनाथः अस्मि । अतः इतःपरम् अहम् अत्र न तिष्ठामि । यत्रकुत्रापि अज्ञातं स्थलं गत्वा जीवनं करिष्यामि" इति उक्तवान् ।

तदा भूस्वामी करुणामयी इव नटनं कुर्वन् - "भवतः दुःखम् अहम् अवगन्तुं शक्नोमि । परन्तु मम परिस्थितिम् अपि भवान् अवगच्छतु । भवतः पिता मद्यपानार्थं यत् धनं मत्तः स्वीकृतवान् आसीत् तस्य ऋणस्य प्रत्यर्पणम् इतोऽपि न जातम् । अतः ऋणपरिहारविषये भवान् चिन्तयतु" इति राजीवम् उक्तवान् ।

"तर्हि मया किं करणीयम् ?" इति राजीवः भूस्वामिनं पृष्टवान् ।

"भवतः पित्रा दासत्वेन भवान् अत्र स्थापितः अस्ति । परन्तु अहं तथा भवन्तं न पश्यामि । प्रतिदिनं भोजनद्वयं दास्यामि । गृहकार्यं सर्वं करोतु । अन्यथा मया उच्यमानं कार्यत्रयं समाप्य भवान् स्वतन्त्रः भवतु" इति उक्तवान् भूस्वामी ।

"तानि कार्याणि कानि ?" इति पृष्टवान् राजीवः ।

"ग्रामात् बहिः पर्वतसमीपे मम काचित्

भूमिः अस्ति । तां कोऽपि न क्रीणाति । यतः सा ऊषरभूमिः । ऊषरताकारणतः ततः मम कोऽपि आयः अपि नास्ति । तस्यां भूमौ भवता कृषिं कृत्वा सस्यसमृद्धिः प्रदर्शनीया । एतत् प्रथमं कार्यम्'' इति उक्तवान् भूस्वामी ।

एतत् श्रुत्वा राजीवः भूस्वामिनम् उक्तवान् - ''ऊषरभूमौ कथं सस्यानि वर्धयितुं शक्यानि ? एतादृशम् असाध्यं कार्यं न वक्तव्यं भवता'' इति ।

''परिश्रमं यः करोति सः सर्वं साधयितुं शक्नुयात् एव । किन्तु एतद्विषये अहं अनुरोधं न करोमि । भवान् स्वस्य स्वातन्त्र्यम् इच्छति चेत् मया उक्तं करोतु'' इति उक्तवान् भूस्वामी ।

अनन्यगतिकः राजीवः एतत् कार्यम् अङ्गीकृतवान् । कानिचन दिनानि क्षेत्रे कष्टेन कार्यं कृतवान् च । एकस्मिन् दिने क्षेत्रे खननसमये 'झण्' इति शब्दः श्रुतः राजीवेन । आश्चर्यम् अनुभवन् राजीवः इतोऽपि खननं यदा कृतवान् तदा तत्र एकः करण्डकः लब्धः । यदा सः उद्घाटितः तदा तस्मात् धूमः बहिः आगतः । अनुक्षणम् एव सः धूमः भूताकारं प्राप्य - ''भवतः आवश्यकतां वदतु । अहं पूरयिष्यामि'' इति अवदत् ।

तस्मात् आश्चर्यचकितः राजीवः - ''भवान् कः ? भवान् मम अपेक्षां किमर्थं पूरयिष्यति ?'' इति पृष्टवान् ।

''अहं करण्डकपिशाचः अस्मि । एतस्य करण्डकस्य अद्भुतशक्तिः अस्ति । एतस्याः शक्तेः द्वारा अहं सज्जनानां साहाय्यं करोमि'' इति उक्तवान् सः पिशाचः ।

''अहं सज्जनः इति भवान् कथं जानाति ?'' इति इतोऽपि आश्चर्येण पृष्टवान् राजीवः ।





SK-F-2



तदा पिशाचः - ''मया पूर्वम् एव उक्तं यत् एतस्य करण्डकस्य अद्भुतशक्तिः अस्ति इति । सज्जनाः यदा एतं स्पृशन्ति तदा सा शक्तिः मां जागरयति'' इति उक्तवान् ।

''भवान् एतं करण्डकं कथं प्रविष्टवान् ?'' इति पृष्टवान् राजीवः ।

''एतादृशी जिज्ञासा भवतः किमर्थम् ? भवान् मम साहाय्यं स्वीकृत्य सुखेन जीवतु'' इति राजीवम् उक्तवान् पिशाचः ।

राजीवः क्षणं यावत् विचिन्त्य - ''तर्हि भवान् शृणोतु । अहं कस्यचित् दासः अस्मि । स्वतन्त्रः भवितुम् अत्यन्तं कष्टम् अनुभवन् अस्मि । भवान् अपि एतस्य करण्डकस्य दासः स्यात् इति संशयेन मया तथा पृष्टम् । मम कष्टपरिहाराय अन्यस्मै कष्टदानम् अहं न इच्छामि'' इति उक्तवान् ।

''वस्तुतः भवान् सज्जनः । अतः मम कथां श्रावयामि । शृणोतु तावत्'' इति वदन् कथाम् आरब्धवान् पिशाचः ।

''पूर्वं रामनगरे धनञ्जयः नाम कश्चित् वणिक् आसीत् । सः अत्यन्तं दुष्टः स्वार्थी च आसीत् । सहोदराणां सम्पत्तिम् अपि स्वयम् एव स्वीकृत्य तान् सर्वान् गृहात् बहिः प्रेषितवान् आसीत् सः । स्वस्य प्रियमित्रं जयदेवम् अपि वञ्चयित्वा तम् अपि ग्रामात् बहिः प्रेषितवान् आसीत् सः ।

जयदेवः अरण्यं गत्वा तपः कृत्वा, अगोचरशक्तिं सम्पाद्य नगरम् आगतवान् । अनन्तरं तेन धनञ्जयः मिलितः । तदा सः तम् उक्तवान् - ''भवान् अधिकं पापं कृतवान् । तेभ्यः मुक्तिं प्राप्तुं निर्धनेभ्यः सम्पत्तिं दानरूपेण ददातु'' इति ।

धनञ्जयः - 'तथैव भवतु' इति उक्तवान् । सः सम्पत्तिं सर्वां बान्धवेभ्यः एव दत्त्वा 'अनन्तरं प्रत्यर्पणीयम्' इति रहसि सन्धिं कृतवान् आसीत् ।

जयदेवः धनञ्जयस्य पुरतः एकं करण्डकं स्थापयित्वा - ''एतस्मिन् अद्भुतशक्तिः अस्ति । शुद्धमनसा एतं स्पृशति चेत् भवतः पापानि नष्टानि भविष्यन्ति । ततः आवाम् उभौ अपि अरण्यं गत्वा शेषजीवनं सुखेन यापयाव'' इति उक्तवान् ।

धनञ्जयः करण्डकस्य अद्भुतशक्तिं ज्ञात्वा - ''अहम् अरण्यं न आगमिष्यामि । एतं करण्डकं भवान् मह्यं दत्त्वा गच्छतु'' इति उक्तवान् ।

परन्तु जयदेवः एतत् न अङ्गीकृतवान् । यदा धनञ्जयः बलात् तत् स्वीकर्तुं गतवान्

तदा अनुक्षणम् एव सः पिशाचः सन् करण्डके बद्धः अभवत् ।

तदा जयदेवः दीर्घं निःश्वस्य - ''अहं मित्रस्य साहाय्यं कर्तुम् इष्टवान् । किन्तु दैवनिर्णयः अन्यः एव आसीत् इति भाति । भवतु नाम । सद्यः एतस्मात् भवतः मोक्षः न भविष्यति । भवान् सज्जनः यदा भविष्यति तदा अन्यसज्जनः मेलिष्यति । तस्य साहाय्यं भवान् करोतु । तदा पापात्, करण्डकात् च भवतः मुक्तिः भविष्यति'' इति उक्तवान् ।

पिशाचरूपतां गतः सः धनञ्जयः अहम् एव । शतवर्षेभ्यः पूर्वम् एव अहम् एवं पिशाचरूपं प्राप्तवान् । दीर्घकालं यावत् अहं जयदेवं मनसि एव निन्दामि स्म । अतः पिशाचरूपात् मम मुक्तिः न जाता । एषु दिनेषु मयि पश्चात्तापः उत्पन्नः अस्ति । अतः अहं सङ्कल्पं कृतवान् अस्मि यत् सज्जनानां साहाय्यं करणीयम् इति । एतदभ्यन्तरे भवान् करण्डकं प्राप्य उद्घाटितवान्, मां दृष्टवान् च । एषा मम कथा'' इति ।

कथां सर्वां श्रुत्वा राजीवः - ''निश्चयेन करुणाजनककथा भवतः । भवान् मम कथाम् अपि शृणोतु तावत्'' इति उक्त्वा स्वकथां श्रावितवान् ।

अनुक्षणम् एव पिशाचः - ''अद्भुतशक्तिं ज्ञातवतः मम एतादृशं कार्यं कष्टाय न । एतस्याम् ऊषरभूमौ क्षणार्धे एव फलोदयम् करिष्यामि अहम्'' इति वदन् कमपि मन्त्रम् उच्चारितवान् सः । अल्पे एव समये तत्र व्रीहिसस्यानि वर्धितानि ।

''इदानीं मया किं करणीयम् ?'' इति राजीवः पिशाचं पृष्टवान् ।

''मम विषयं स्वामिनं मा वदतु । अहं करण्डके अत्रैव भवामि । भवान् स्वामिनः समीपं गत्वा अन्यत् कार्यद्वयं ज्ञात्वा





आगच्छतु'' इति उक्तवान् पिशाचः ।

राजीवः भूस्वामिनः समीपं गत्वा - 'ऊषरभूमौ व्रीहिवर्धनं जातम्' इति उक्तवान् । तदा भूस्वामी आश्चर्येण, कुतूहलेन च क्षेत्रं प्रति प्रस्थितवान् । तेन सह तस्य पुत्री सावित्री अपि प्रस्थिता । उभौ अपि सस्यसमृद्धं क्षेत्रं दृष्ट्वा आश्चर्यचकितौ ।

''द्वितीयं कार्यं वदतु तावत्'' इति भूस्वामिनम् उक्तवान् राजीवः ।

''भवान् सामान्यः न । एतां भूमिं फलवतीं कर्तुं कानिचन वर्षाणि आवश्यकानि । भवति अगोचरशक्तिः अस्ति इति कारणतः एतत् सिद्धम् । अन्यथा एतत् न भवेत् एव'' इति वदन् भूस्वामी स्वस्कन्धे स्थितं राङ्कवं भूमौ प्रसार्य - ''एतस्मिन् राङ्कवे कनकवृष्टिः भवतु'' इति उक्तवान् ।

राजीवः करण्डकपिशाचं यदा स्मृतवान् तदा अनुक्षणम् एव राङ्कवस्य उपरि कनकनाणकानि पतितानि । भूस्वामिनः आश्चर्यस्य सीमा एव न आसीत् ।

''इतःपरं तृतीयं कार्यं वदतु'' इति उक्तवान् राजीवः । भूस्वामी किमपि वक्तुं यावत् उद्युक्तः तावता तस्य पुत्री सावित्री - ''भवान् मां परिणयतु'' इति राजीवम् उक्तवती ।

''तत् कर्तुम् अहं सिद्धः अस्मि । परन्तु प्रथमं मम स्वातन्त्र्यम् आवश्यकम्'' इति वदन् राजीवः भूस्वामिनं दृष्टवान् ।

भूस्वामी तं कोपेन पश्यन् - ''अल्पायाः क्षुद्रशक्तेः कारणतः कोऽपि मम जामाता भवितुं नार्हति । भवान् मम दासः अस्ति इति तु मा विस्मरतु । मुग्धायाः मम पुत्र्याः वचनं मा श्रृणोतु । भवता करणीयं तृतीयं कार्यम् इतोऽपि अवशिष्टम् अस्ति'' इति उक्तवान् ।

''अस्तु ! भवान् एव तत् तृतीयं कार्यं वदतु'' इति राजीवः उक्तवान् ।

''सर्वदा मम सेवां कर्तुं दासः आवश्यकः । भवान् वा मम चिरदासः भवतु, अन्यं कम् अपि एतस्मिन् कार्ये नियोजयतु वा'' इति उक्तवान् भूस्वामी ।

एतत् वचनं श्रुत्वा राजीवः - 'एषः भूस्वामी कृपणः अस्ति । एतस्य दास्यात् मम मुक्तिः नास्ति' इति निराशाम् अनुभूतवान् । परन्तु क्षणाभ्यन्तरे तस्य मनसि कश्चन उपायः स्फुरितः ।

सः भूस्वामिनम् उक्तवान् - ''भवान्

क्षणं यावत् तिष्ठतु । भवते दासं ददामि'' इति उक्तवान् ।

भूस्वामी तत्रैव कनकनाणकानि गणयन् उपविष्टवान् । राजीवः पिशाचस्य समीपं गत्वा प्रवृत्तं सर्वं निवेद्य - ''अत्यन्तं दुष्टः भूस्वामी मनुष्यः भवितुम् अनर्हः अस्ति । भवान् दुर्गुणान् त्यक्त्वा सज्जनः अभवत् । इदानीं भवतोः स्थानपरिवर्तनं भवतु । भूस्वामिनः आत्मा पिशाचरूपेण करण्डके तिष्ठतु । भवान् भूस्वामिनः शरीरं प्रविश्य जीवतु । आवयोः युगपत् एव स्वातन्त्र्यं सिद्धं भविष्यति'' इति उक्तवान् ।

करण्डकपिशाचः राजीवस्य चातुर्यं श्लाघमानः राजीवेन यथा उक्तं तथा एव कृतवान् । तन्नाम भूस्वामिनं पिशाचं कृत्वा करण्डके बद्ध्वा स्वयं भूस्वामित्वं प्राप्तवान् ।

तदा राजीवः - ''स्वामिन् ! भवतः अपेक्षायाः अनुगुणं भवते दासरूपेण एतं करण्डकपिशाचं ददामि । एतस्मात् भवता उक्तं तृतीयं कार्यम् अपि कृतं भवति । अतः इदानीम् अहं स्वतन्त्रः'' इति उक्तवान् ।

भूस्वामिनः आत्मा पिशाचः सन् करण्डके बद्धः आसीत् खलु ? सः बहिः आगन्तुं प्रयतमानः आसीत् । भूस्वामिनः रूपेण स्थितः धनञ्जयः तं पिशाचं प्रवृत्तं सर्वम् उक्त्वा - ''ये स्वार्थिनः सन्ति ते आत्मना निर्मिते गर्ते स्वयम् एव पतन्ति । दासम् अपेक्षितवान् भवान् इदानीं स्वयम् एव दासः अभवत् । भवादृशस्य दासस्य आवश्यकता मम नास्ति । अतः करण्डकेन सह भवन्तम् अपि मृत्तिकायां निखनामि । भवादृशाः सन्मार्गे आनेतव्याः इत्येव जयदेवः एतादृशं करण्डकं सृष्टवान् अस्ति । शीघ्रातिशीघ्रं भवान् सज्जनः भवतु'' इति उक्तवान् ।

अनन्तरं राजीवः, धनञ्जयः च गृहं गतवन्तौ । राजीवः सावित्रीं परिणीतवान् । विवाहस्य केषाञ्चित् दिनानाम् अनन्तरं धनञ्जयः दिवं गतः ।

स्वयं सन्तोषेण जीवन्, अन्यान् अपि पोषयन् राजीवः बहूनि वर्षाणि जीवितवान् । अतः तं करण्डकं कोऽपि न स्पृष्टवान् एव । मृत्तिकायां स्थितः सः करण्डकपिशाचः अद्यापि अन्यभूस्वामिनं प्रतीक्षमाणः अस्ति ।



# शठं प्रति शाठ्यम्

हेमावतीनदीतीरस्य पार्श्वे कश्चित् ग्रामः आसीत् । रामः तस्य ग्रामस्य महान् कृषिकः आसीत् । अन्ये कृषिकाः तं गौरवेण पश्यन्ति स्म । तथापि रामः कृपणः आसीत् । एकदा यस्मिन् प्रकोष्ठे व्रीहिस्यूताः स्थापिताः आसन् तं प्रकोष्ठं कश्चन सर्पः प्रविष्टवान् । तदा कर्मकरः एतं विषयं रामम् उक्तवान् । एतं विषयं श्रुत्वा रामः उपेक्षया कर्मकरम् उक्तवान् - ''सर्पं दण्डेन ताडयित्वा मारयतु'' इति ।

''स्वामिन् ! सः सामान्यः सर्पः न । तस्य मारणं मया न शक्यते । अतः अहितुण्डिकम् आनेष्यामि'' इति उक्तवान् कर्मकरः ।

रामः अङ्गीकारं सूचितवान् । अनन्तरम् अहितुण्डिकः आगत्य प्रकोष्ठे स्थितं सर्पं गृहीत्वा कण्डोले स्थापितवान् । एतस्य निमित्तं सः रामं 'दश रूप्यकाणि ददातु' इति उक्तवान् ।

तदा रामः अहितुण्डिकं कोपेन पश्यन् - ''पश्यतु ! सर्पग्रहणार्थं भवान् पञ्च निमेषान् व्ययीकृतवान् स्यात् । निमेषात्मककार्यस्य निमित्तं भवान् रूप्यकद्वयं पृच्छति खलु !'' इति उक्तवान् ।

''तर्हि एतं सर्पं भवान् एव गृह्णातु'' इति वदन् अहितुण्डिकः कण्डोलतः सर्पं बहिः प्रेषितवान् ।

सः सर्पः पुनः व्रीहिस्यूतानां मध्ये निलीय स्थितः । एतत् दृष्ट्वा रामः भयेन - ''भोः ! प्रथमं सर्पं बहिः आनयतु । भवते दश रूप्यकाणि दास्यामि'' इति उक्तवान् ।

तदा अहितुण्डिकः - ''स्वामिन् ! एकवारं सर्पं ग्रहीतुं दश रूप्यकाणि पृष्टवान् आसम् । इदानीं द्वितीयवारं सर्पः ग्रहीतव्यः अस्ति । अतः विंशतिः रूप्यकाणि दातव्यानि भवन्ति भवता । यदि एतत् अङ्गीक्रियते तर्हि एव अहं सर्पं ग्रहीष्यामि । अन्यथा एषोऽहं प्रस्थितः'' इति उक्त्वा ततः गमनार्थम् उत्थितवान् ।

एतत् दृष्ट्वा रामः - ''भोः, स्वीकरोतु विंशतिं रूप्यकाणि । आदौ सर्पं गृहीत्वा इतः नयतु'' इति वदन् अहितुण्डिकाय विंशतिं रूप्यकाणि दत्तवान् ।

''कृपणात् एतस्मात् धनं प्राप्तुं योग्यम् उपायम् आश्रितवान् अहितुण्डिकः नितरां बुद्धिमान्'' इति वदन्तः ग्रामीणाः अहितुण्डिकस्य श्लाघनं कृतवन्तः ।






# १८

[रूपधरेण करणीयानि कार्याणि समाप्तप्रायाणि आसन् । पद्ममुखीं परिणेतुम् इच्छन्तः ये ग्रीक्राजकुमाराः रूपधरगृहे वसन्तः तदीयां सम्पत्तिं स्वेच्छया व्ययीकुर्वन्तः आसन्, तान् सर्वान् पुत्रेण धीरमतिना सह मिलित्वा यमसदनं प्रेषितवान् सः । एतत्कार्यं साधयितुं रूपधरः केवलस्य पराक्रमस्य अवलम्बनं न कृतवान् आसीत् । अपि तु युक्तिम् अपि अवलम्बितवान् आसीत् । देवाः अपि रूपधरस्य साहाय्यं कृतवन्तः आसन् । किन्तु एतावता अपि रूपधरस्य सर्वाणि कष्टानि अपगतानि इति न । तदनन्तरम् ....]

यदा भवनस्य स्वागतप्रकोष्ठे महत् युद्धं प्रचलत् आसीत् तदा पद्ममुखी स्वप्रकोष्ठे गाढनिद्रायां निमग्ना आसीत् । बहुकीर्तिः महता सम्भ्रमेण तस्याः प्रकोष्ठं गत्वा त्वरया ताम् उत्थाप्य - "अये, उत्तिष्ठतु तावत् । यस्मिन् काले सन्तोषेण नर्तनं करणीयम् आसीत् तस्मिन् काले निद्रां करोति खलु भवती ! किम् एतत् ? भवत्याः पतिः दुष्टानां संहारं कृतवान् अस्ति । कष्टमयानि दिनानि अपगतानि । शीघ्रम् उत्तिष्ठतु तावत्" इति अवदत् ।

एतत् श्रुतवत्याः पद्ममुख्याः क्षणकालं यावत् स्वकर्णयोः विश्वासः एव न जातः । अनन्तरं सा सम्भ्रमेण उत्थाय - "विधिविलासाः नितरां विचित्राः ! दुष्टानां संहारकः सः शूरः मया सर्वप्रथमं द्रष्टव्यः" इति उक्तवती ।

सा वृद्धया बहुकीर्त्या सह अधः आगत्य रूपधरस्य पुरतः मौनम् आसन्दे उपविष्टवती । तस्याः मुखे काऽपि भावना

तर्हि एतस्मिन् अहं विश्वासं कुर्याम्'' इति उक्तवती पद्ममुखी ।

तदा रूपधरः पुत्रम् उक्तवान् - ''धीरमते ! तां मा पीडयतु भवान् । सा कामं मां परीक्षतां नाम । परीक्षानन्तरम् एव सा जानातु अहं कः इति । मम एतादृशं वेषादिकं दृष्ट्वा सा चिन्तितवती अस्ति यत् अहम् अन्यः एव स्याम् इति । आदौ अस्माभिः स्वकर्तव्यविषये चिन्तनीयम् । वयं बहून् राजकुमारान् मारितवन्तः स्मः । तेषु एकस्य मारणात् अपि महती विपत्तिः सम्भाव्यते । तद्बान्धवाः अस्मान् मारयितुं प्रयत्नं कुर्युः एव । वयं तु इथाकास्थान् प्रमुखयुवकान् मारितवन्तः स्मः । एतस्य परिणामः कीदृशः भवेत्, तदर्थं किं करणीयम् इति एतत्क्षणे एव चिन्तयित्वा योग्यः मार्गः आश्रयणीयः'' इति ।

''इदानीं किं करणीयम् इति भवान् एव वदतु । उपायचिन्तने भवान् एव खलु अद्वितीयः'' इति उक्तवान् धीरमतिः ।

''अस्तु नाम । आदौ वयं स्नानं कृत्वा नूतनवस्त्राणि धराम । ततः नाट्यगानादिकम् आरम्भणीयम् । एतत् श्रुत्वा जनाः चिन्तयिष्यन्ति यत् अत्र विवाहः, अन्यः कोऽपि कार्यक्रमः वा प्रचलन् अस्ति इति । यावत् युवकानां मरणस्य वार्ता अन्यैः ज्ञायते ततः पूर्वम् एव अस्माभिः इतः निर्गन्तव्यम्, अन्यत्र सुरक्षिते स्थले आश्रयः प्राप्तव्यः च'' इति उक्तवान् रूपधरः ।

अनन्तरं रूपधरस्य सूचनायाः अनुगुणं सर्वे स्नात्वा वस्त्राभरणादीनि धृत्वा नाट्यम् आरब्धवन्तः । एतत् श्रुत्वा जनाः



न दृश्यते स्म । तस्याः मौनं दृष्ट्वा रूपधरः आश्चर्यचकितः । 'दर्शनसमनन्तरम् एव महता सन्तोषेण एषा सम्भाषणं कुर्यात्' इति चिन्तितवान् आसीत् सः । किन्तु अत्र सर्वं विपरीतम् आसीत् ।

''अम्ब ! भवती सचेतना, उत शिलामयतां गता ? चिरकालानन्तरम् उपस्थितं पितरं दृष्ट्वा अपि किमर्थं शिला इव उपविष्टवती अस्ति भवती ?'' इति धीरमतिः आक्षेपमिश्रितेन स्वरेण पृष्टवान् ।

''वत्स ! किं वदानि अहम् ? जीवने कष्टपरम्पराम् एव सम्मुखीकृतवत्याः मम हृदयं पाषाणायते । अत्र उपस्थितः भवतः पिता एव वा इति मया आदौ परीक्षणीयम् । भवत्पित्रा मया च ज्ञातानि रहस्यानि बहूनि सन्ति । तेषु एकं द्वयं वा यदि एषः वदेत्

चिन्तितवन्तः – 'अद्य एषा योग्यं वरं चितवती इति भाति । पतिः देशान्तरं गतः न प्रत्यागतः इत्यतः वराकी एषा अनन्यगतिकतया पुनर्विवाहम् अङ्गीकुर्वती अस्ति' इति ।

रूपधरः स्नानादिकं समाप्य यथायोग्यं वस्त्रादिकं धृत्वा नवत्वं प्राप्तवान् । ततः पत्नीम् उद्दिश्य – ''कीदृशी गृहिणी भवती ! विंशतिवर्षाणाम् अनन्तरं प्राप्तस्य अपि मम सेवां सम्यक् न करोति एव भवती । यदि अन्या स्यात् तर्हि कियन्तं सन्तोषं प्राप्तवती स्यात्'' इति उक्त्वा वृद्धदासीम् उद्दिश्य – ''भोः, मह्यम् अपि एतस्याः पार्श्वे एव शय्यां सज्जीकरोतु'' इति उक्तवान् ।

तदा पद्ममुखी दासीम् उद्दिश्य – ''एतं मञ्चं पार्श्वे स्थापयित्वा तदुपरि शय्यां प्रसारयतु भवती'' इति सूचितवती ।

एतत् श्रुत्वा अत्यन्तं कुपितः रूपधरः – ''मम मञ्चः केन स्पृष्टः ? सः अन्यत्र नयनयोग्यः न आसीत् खलु ? कः तस्य वैशिष्ट्यं नाशितवान् ?'' इति पृष्टवान् ।

वस्तुतः तस्य मञ्चस्य अपूर्वं वैशिष्ट्यम् आसीत् । रूपधरः यदा तत्र गृहं निर्मितवान् तदा तत्र कश्चन वृक्षः आसीत् । वृक्षच्छेदनानन्तरं यः मूलकाण्डभागः तत्रैव अवशिष्टः तं मञ्चस्य पादत्वेन परिकल्प्य अन्यान् त्रीन् पादान् परिकल्प्य मञ्चं सज्जीकृतवान् आसीत् रूपधरः । मञ्चस्य एतत् रहस्यम् एषः जानाति वा न वा इति परीक्षितुम् एव पद्ममुखी उक्तवती आसीत् – 'मञ्चम् अन्यत्र नयतु' इति । रूपधरस्य वचनस्य श्रवणात् सा नितरां सन्तुष्टा । सा



झटिति रूपधरस्य पादौ गृहीत्वा अश्रूणि स्रावयन्ती – ''आर्यपुत्र ! अलं कोपेन । मां कोऽपि वञ्चयेत् इति भीतिः आसीत् मम । अतः एतत्सर्वं कृतवती'' इति उक्तवती ।

पत्न्यां जातं परिवर्तनं दृष्ट्वा रूपधरः नितरां सन्तुष्टः । तस्यां रात्रौ पत्युः अनुभवं सर्वं श्रुतवती पद्ममुखी । प्रातः एव रूपधरः रक्षणाकवचं धृत्वा, धीरमतिम् उत्थाप्य तम् अपि आत्मना सह नीतवान् । यथा अन्ये न जानीयुः तथा उभौ अपि नगरतः प्रस्थितवन्तौ । उभौ अपि रूपधरस्य पितुः पिङ्गलस्य समीपं गतवन्तौ । पूर्वं यः धनिकः आसीत् सः पिङ्गलः इदानीं सस्यानि वर्धयन् महता कष्टेन जीवति स्म । 'पाकसज्जतां कुर्वन्तु' इति रूपधरः कर्मकरान् उक्त्वा वाटिकां गतवान् ।

वाटिकायां वृद्धः पिङ्गलः कश्चित् वृक्षं परितः गर्तं कुर्वन् आसीत् । तेन धृतं युतकम् अत्यन्तं मलिनम् आसीत् । तादृशस्थितौ स्थितं पितरं दृष्टवतः रूपधरस्य नेत्राभ्याम् अश्रूणि आगतानि । अनुक्षणम् एव 'सर्वे विषयाः वक्तव्याः' इति सः चिन्तितवान् । परन्तु 'मम परिचयं पिता प्राप्नुयात् उत न' इति परीक्षितुम् इच्छन् सः पितुः समीपं गत्वा - ''किं तात ! भवान् वाटिकायाम् उत्तमरीत्या सस्यानि वर्धितवान् । परन्तु भवान् तु एवं मलिनः अस्ति । भवतः सेवया भवदीयस्वामी तृप्तः नास्ति वा ?'' इति पृष्टवान् ।

''वत्स ! भवान् कः ? भवान् कुतः आगतवान् ?'' इति तं पृष्टवान् पिङ्गलः ।

''अहं देशसञ्चारं कुर्वन् भवामि । पञ्चवर्षेभ्यः पूर्वं रूपधरः नाम कश्चित् मया मिलितवान् आसीत् । सः अस्मिन् देशे एव वसति स्म इति अहं श्रुतवान् । सः पुनः मेलिष्यति चेत् तस्मै उपायनं दास्यामि इति उद्देशेन अहम् अत्र आगतवान् अस्मि'' इति पिङ्गलम् उक्तवान् रूपधरः ।

स्वपुत्रस्य नामश्रवणमात्रेण एव पिङ्गलः उच्चैः रोदनम् आरब्धवान् । तत् दृष्ट्वा आर्द्रहृदयः रूपधरः पितरम् आलिङ्ग्य - ''तात ! अहम् एव भवतः पुत्रः रूपधरः । भवान् इतःपरं रोदनं मा करोतु । विंशतिं वर्षाणि यावत् कष्टम् अनुभूय आगतवान् अस्मि अहम् । मम गृहे स्थित्वा ये दुष्टाः मम पत्नीं पीडयन्ति स्म तान् मारयित्वा आगतवान् अस्मि अहम्'' इति उक्तवान् ।

''भवान् किमर्थं तथा कृतवान् ? एतस्य परिणामः घोरः भवेत् । इथाकाजनाः अन्यदेशीयानां साहाय्यं स्वीकृत्य भवन्तं मारयितुं प्रयत्नं करिष्यन्ति'' इति पिङ्गलः भयेन उक्तवान् ।



तदा रूपधरः - ''तात ! भवान् भीतः मा भवतु । पाकः सिद्धः स्यात् । भोजनं करिष्यावः तावत्'' इति वदन् पितरं गृहम् आनीतवान् । गृहे वराहपालकः, अजपालकश्च पाकं सज्जीकृतवन्तौ आस्ताम् । स्नानं कृत्वा आगतवन्तं दृढकायम्, आजानुबाहुं पितरं दृष्ट्वा रूपधरः तृप्तिं सन्तोषं च अनुभूतवान् । अनन्तरम् उभौ अपि भोजनं कृतवन्तौ ।

एतावति काले रूपधरेण कृतां संहारवार्ताम् इथाकानगरे सर्वे ज्ञातवन्तः आसन् । केचन जनाः कोलाहलं कुर्वन्तः रूपधरस्य गृहं परितः स्थितवन्तः । केचन सम्बद्धानां शवम् अपि नीतवन्तः । दूरप्रान्ततः आगतानां शवान् नौकायाम् आरोप्य तेषां देशं प्रति प्रेषितवन्तः ।

अनन्तरं नगरे सर्वत्र सभाः आयोजिताः । दुर्बुद्धेः पिता - ''मित्राणि ! रूपधरः भयङ्करं मारणहोमम् एव कृतवान् । पूर्वं यदा सः युवकैः सह युद्धार्थं नौकया गतवान् तदा नौकाः एव नष्टाः । नगरं प्रति आगमनानन्तरम् अपि सः एकाकी सन् अन्यान् युवकान् मारितवान् । एतादृशः दुष्टः प्रथमम् एव मारणीयः । अस्माकं पुत्रान् मारितवन्तं रूपधरं यदि वयं न मारयेम तर्हि तत् अस्माकं वंशस्य अपमाननाय भवेत् । प्रतीकारार्थं मया तु प्रयत्नः क्रियते एव । ततः वीरस्वर्गः वा प्राप्येत, मरणं वा । एषोऽहं युद्धार्थं प्रस्थितः अस्मि'' इति उक्तवान् । तस्य वचनानि श्रुत्वा तत्र स्थितानां सर्वेषां नेत्राभ्याम् अश्रूणि आगतानि ।

परन्तु तस्मिन् समये एव कश्चित् जनः तत्र आगतवान् । रूपधरः तम् एकं न मारितवान् आसीत् । सः सभाम् उक्तवान् - ''प्रजाः ! मम वचनं श्रृण्वन्तु कृपया ।



तस्मिन् मारणहोमे अहम् अपि आसम् । रूपधरस्य पार्श्वे स्थितवतीं बुद्धिमतिदेवीम् अहं प्रत्यक्षं दृष्टवान् अस्मि । दैवनिर्णयेनैव सः मारणहोमः प्रवृत्तः । अतः पुनः अस्माभिः युद्धं क्रियते चेत् तत् उचितं न भविष्यति'' इति उक्तवान् ।

तस्य वचनानि तत्रत्याः सर्वे अपि अङ्गीकृतवन्तः । तेषु कश्चित् वृद्धः उत्थाय - ''जातं जातम् एव । पुनः अन्यः मारणहोमः किमर्थं करणीयः ? एतां घटनाम् अत्रैव समापयिष्यामः । मूलतः भवतां पुत्रैः एव अपराधः कृतः । तादृशदुष्कार्यं मा कुर्वन्तु इति पूर्वम् एव ते सूचिताः आसन् मया । परन्तु मम वचनं धिक्कृत्य भवतां पुत्राः 'रूपधरः न प्रत्यगमिष्यति' इति धैर्येण तस्य गृहं गत्वा सम्पत्तिं लुण्ठितवन्तः । तस्य पत्नीम् अवमानितवन्तः च । तदर्थं ते यथोचितं दण्डनम् अपि अनुभूतवन्तः । अत्र रूपधरस्य दोषः कोऽपि नास्ति'' इति उक्तवान् ।

एतत् वचनं श्रुत्वा इतोऽपि सन्तुष्टाः जनाः सभातः गतवन्तः । केचन जनाः प्रतीकारार्थं सिद्धाः अभवन् । दुर्बुद्धेः पितुः नेतृत्वे ते आयुधानि गृहीत्वा प्रस्थितवन्तः । यावत् ते पिङ्गलस्य गृहस्य समीपम् आगताः तावता रूपधरः तस्य सेवकाः च आयुधानि स्वीकृत्य तान् सम्मुखीकर्तुं सिद्धाः आसन् ।

धीरमतिः पितरम् उक्तवान् - ''तात ! भवान् इदानीं मम पराक्रमं पश्यतु'' इति ।

तदा पिङ्गलः महता आनन्देन - ''हे भगवन् ! अद्य अहं सन्तुष्टः अस्मि । मम पुरतः एव पराक्रमेण युद्धं कुर्वन्तं मम पुत्रं, प्रौत्रं च पश्यन् अस्मि'' इति उक्तवान् ।

ततः सः एकं बाणं दुर्बुद्धेः पितरं लक्ष्यीकृत्य क्षिप्तवान् । एतस्मात् दुर्बुद्धेः पिता भूमौ पतितवान् । रूपधरः तस्य पुत्रः च अन्येषाम् उपरि आक्रमणं कृतवन्तौ ।

तावति काले - ''इथाकाप्रजाः ! एतं मारणहोमं स्थगयन्तु'' इति बुद्धिमतीदेव्याः वाणी श्रुता ।

अनुक्षणम् एव सर्वे स्तम्भीभूताः । तेषां हस्तेभ्यः आयुधानि अधः पतितानि । रूपधरस्य द्वेषिणः सर्वे नगरं गतवन्तः ।

अनन्तरं रूपधरस्य शत्रुभयम् एव न आसीत् । सः पत्नी-पुत्र-पित्रादिभिः सह सुखेन जीवितवान् । (समाप्तम्)






# दैवकृपा

पूर्वं पर्षियादेशे कस्मिंश्चित् ग्रामे लतीफः नाम कश्चन तरुणः आसीत् । सः अतीव अलसः, मूर्खश्च आसीत् । दृढकायः सन् अपि सः कष्टेन कार्यं न करोति स्म । उदरपूरणार्थं सः भिक्षाटनं करोति स्म ।

केषाञ्चित् दिनानाम् अनन्तरं तस्मिन् ग्रामे तस्य अपेक्षानुगुणं भिक्षा न लब्धा । अतः 'इतःपरम् अस्मिन् ग्रामे न भवितव्यम्' इति विचिन्त्य लतीफः एकस्मिन् दिने प्रातः तस्मात् ग्रामात् प्रस्थितवान् ।

मध्येमार्गं तेन किञ्चन अरण्यं प्राप्तम् । तत्र अङ्गविहीनः कश्चित् शृगालः तेन दृष्टः । तं दृष्ट्वा लतीफः आश्चर्येण - 'अहो विचित्रा खलु भगवतः सृष्टिः ! अङ्गविहीनः एषः शृगालः अस्मिन् अरण्ये कथं जीवेत् ? एषः कुतः आहारं सम्पादयेत् ?' इति चिन्तितवान् ।

एतस्मिन् एव समये कश्चन व्याघ्रः कञ्चित् हरिणं मारयित्वा तेन मार्गेण एव तम् आकृष्य आगतवान् । व्याघ्रं दृष्ट्वा लतीफः भयेन तत्रैव निलीय उपविष्टवान् ।

सः व्याघ्रः बुभुक्षानिवारणपर्यन्तं हरिणं खादित्वा अवशिष्टं मांसं तत्रैव त्यक्त्वा अग्रे गतवान् । व्याघ्रेण त्यक्तं मांसं सः अङ्गविहीनः शृगालः खादित्वा स्वबुभुक्षां निवारितवान् ।

एतत् सर्वं दृष्ट्वा लतीफः एकं विषयं ज्ञातवान् यत् - सकलप्राणिनां पोषकः भगवान् एव अङ्गविहीनाय शृगालाय अपि समये समये आहारं कल्पयति इति । 'यथा शृगालाय आहारं कल्पयति सः तथैव मह्यम् अपि किमर्थम् आहारं न कल्पयेत् ? इतःपरम् अहम् अपि कुत्रापि भिक्षाटनं न करिष्यामि । भगवति विश्वसिमि । शृगालः इव अहम् अपि एकस्मिन् कोणे उपविशामि । प्रतिदिनं मम आहारः देवेन

''पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा''

एव मम समीपं प्रेषणीयः' इति निर्णीय सः अग्रे प्रस्थितवान् ।

लतीफः पार्श्वस्थं ग्रामं गत्वा तस्मिन् ग्रामे स्थितस्य यवनमन्दिरस्य पुरतः भिक्षायाचनार्थं हस्तं प्रसार्य स्थितवान् ।

तदा तत्रत्यः ज्येष्ठः कश्चित् तं दृष्ट्वा - "अत्र कोऽपि न वसति । भवान् अन्यत्र गच्छतु" इति उक्तवान् ।

"यत्र भवनं दृश्यते तत्र कोऽपि भवेत् एव खलु ? यः अत्र भवति सः निर्धनानां साहाय्यं करोति एव" इति तम् उक्तवान् लतीफः ।

तदा सः ज्येष्ठः - "मन्दिरे कः अस्ति इति भवान् चिन्तितवान् ? तत्र सकलजीवात्मनां जन्मदाता पोषकः सर्वेश्वरः अस्ति । भवान् तस्य उपहासं मा करोतु । कृपया भवान् इतः गच्छतु" इति उक्तवान् ।

"सर्वेश्वरात् किमपि अप्राप्य मया रिक्तहस्ततया गन्तव्यं वा ? यत्किमपि भवतु, भिक्षां स्वीकृत्य एव इतः गमिष्यामि" इति वदन् लतीफः कस्यचित् वृक्षस्य छायायां वस्त्रं प्रसार्य - "हे दीनबन्धो ! भवतः अदृश्यभाण्डागारात् मह्यं प्रतिदिनम् आहारं प्रेषयतु" इति भगवन्तम् उद्दिश्य वदन् तत्रैव उपविष्टवान् ।

लतीफः तस्मिन् ग्रामे नूतनः आसीत् । अतः तस्य द्रष्टारः एव न आसन् ।

केषाञ्चित् दिनानाम् अनन्तरम् आहारस्य अभावात् लतीफः नितरां कृशः जातः । शक्तिविहीनः सः आसन्नमरणः अभवत् ।

तस्मिन् समये प्रार्थनामन्दिरस्य गर्भगृहात् कानिचन वचनानि श्रुतानि - "भोः मूर्ख ! भवान् अङ्गविहीनः शृगालः इव न । आत्मनि शक्तिः अस्ति चेदपि भवान् एवं भिक्षायाचनं करोति किल ? एतत् नीचकार्यम् अस्ति । कष्टेन कार्यं कृत्वा ये अन्येषां साहाय्यं कुर्वन्ति तान् एव अहम् अनुगृह्णामि, न तु अलसान्" इति ।

एतानि वचनानि श्रुतवतः लतीफस्य लज्जा अभवत् । अनुक्षणम् एव तस्मिन् ज्ञानोदयः अपि जातः । सः कष्टम् अनुभवन् कथञ्चित् यवनमन्दिरतः बहिः आगतवान् । तस्मात् दिनात् सः कष्टेन कार्यं कुर्वन् धनं सम्पादयन् गौरवेण जीवनं यापितवान् ।





# शिवमल्लस्य कथा

साहसी त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान् । वृक्षात् शवम् अवतार्य स्कन्धे संस्थाप्य यथापूर्वं मौनं श्मशानाभिमुखं प्रस्थितवान् च । तदा शवान्तर्गतः वेतालः अवदत् - ''अये, राजन् ! अस्मिन् मध्यरात्रसमये हंसतूलिकातल्पे शयनं कृत्वा सुन्दराः स्वप्नाः द्रष्टव्याः आसन् भवता । किन्तु भवान् श्मशानरक्षकः इव अत्र अटन् अस्ति इति यत्, सा विधिलीला इत्येव चिन्तयामि अहम् । सुन्दरी स्त्री प्राप्तव्या, अपारसुवर्णराशिः प्राप्तव्यः इति मानवः सदा चिन्तयति । किन्तु भवतः व्यवहारेण अहं तर्कयामि यत् भवान् कस्याश्चित् स्त्रियाः हृदयं जेतुं, तस्याः अनुरागं प्राप्तुं च प्रयतमानः अस्ति इति । भवतः व्यवहारः समीचीनः एव स्यात् नाम । किन्तु एतावत्या सहनया, श्रद्धया च कार्यं कुर्वन् भवान् अन्तिमक्षणे शिवमल्लः इव अविवेकेन

## वेतालकथा



व्यवहरन् आत्मना परिश्रमेण साधितं फलम् अपि अन्यस्मै दद्यात् इति मम सन्देहः । भवति विवेकं जागरयितुम् अहं शिवमल्लस्य कथां श्रावयामि । श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा -

पूर्वं राजा विजयसेनः आनन्दपुरं पालयति स्म । सः सहृदयः समर्थः च राजा । आनन्दपुरस्य पश्चिमदिशि अरण्यम् अस्ति । तत्र आदिवासिनः निवसन्ति स्म । युद्धसमये आदिवासिनः विजयसेनस्य साहाय्यम् आचरन्ति स्म ।

शम्भुनाथः आदिवासिनां नायकः । तस्य पुत्रः शिवमल्लः । शिवमल्लः धनुर्विद्यानिपुणः । सः वेगेन धावन्तं हरिणं व्याघ्रं वा क्षणाभ्यन्तरे मारयितुं समर्थः आसीत् ।

कैवल्यपुरम् आनन्दपुरस्य प्रतिवेशिराज्यम् । तत्रत्यः राजा धीरसेनः विजयसेनस्य सामन्तराजः आसीत् । धीरसेनस्य पुत्री लीलावती कदाचित् सखीभिः सह विहारार्थं वनं गतवती । आदिवासिनां वसतिप्रदेशमार्गेण सा रथेन यदा गच्छन्ती आसीत् तदा कस्मिंश्चित् आम्रवृक्षे स्थितः महान् अजगरः तां खादितुं मुखं व्यादाय आगतवान् । एतस्मात् नितरां भीता लीलावती रथात् अधः उत्प्लुत्य 'रक्षन्तु' इति आक्रोशनं कुर्वती धावितवती ।

तस्मिन् एव समये मृगयार्थं तं प्रदेशम् आगतः विजयसेनः भीतायाः लीलावत्याः ध्वनिं श्रुत्वा अश्वारूढः सन् वेगेन तत्र आगतवान् । तत्रत्यं दृश्यं दृष्ट्वा दिङ्मूढः जातः च । 'बाणप्रयोगेण अजगरं मारयितुं शक्यते । किन्तु बाणः लक्ष्यच्युतः सन् लीलावत्याः उपरि पतति चेत् महान् अनर्थः स्यात्' इति यावत् विजयसेनः चिन्ताकुलः आसीत्, तावता तत्र आगतः शिवमल्लः तूणीरात् बाणं निष्कास्य अजगरं लक्ष्यीकृत्य प्रयुक्तवान् एव । बाणेन शिरसि ताडितः अजगरः अप्रक्षणे एव मृतः अभवत् । लीलावती रक्षिता अभवत् ।

अनन्तरं शिवमल्लः लीलावत्याः समीपं गतवान् । सा तं कृतज्ञताभावेन पश्यन्ती - ''मम नाम लीलावती । अहं कैवल्यपुरस्य राजकुमारी अस्मि । भवतः साहाय्यात् अहं रक्षिता अभवम् । अहं कृतज्ञा अस्मि । मम तृप्त्यर्थम् एतं रत्नहारं स्वीकरोतु'' इति वदन्ती स्वकण्ठे विद्यमानं हारं निष्कास्य

शिवमल्लाय दत्तवती ।

हारं स्वीकृत्य तदेकदृष्ट्या पश्यन्तं शिवमल्लं युवराज्ञी लीलावती मन्दहासपूर्वकम् उक्तवती - ''विरामकाले कदाचित् राजधानीम् आगच्छतु । 'भवान् मम अङ्गरक्षकः भवतु' इति मम इच्छा । यदि भवता अनुमन्यते तर्हि एतं विषयम् अहं पितरं निवेदयिष्यामि'' इति ।

लीलावती-शिवमल्लयोः संल्लापदृश्यं दृष्टवान् विजयसेनः ईर्ष्यया तप्तः अभवत् । 'राजकुमारी सकृत् वा मां न दृष्टवती' इति चिन्तयतः तस्य महान् खेदः अभवत् । अतः अनुक्षणम् एव विजयसेनः राजधानीं गतवान् ।



सुन्दरीं लीलावतीम् एव सदा चिन्तयति स्म विजयसेनः । 'लीलावत्या विना जीवनम् एव निरर्थकम् । सा तु मम सामन्तराजस्य पुत्री । अतः मया सह परिणयं सा अवश्यम् अङ्गीकरिष्यति एव । यदि न अङ्गीकरोति, तर्हि तस्य कारणं शिवमल्लः एव' इति चिन्तितवान् विजयसेनः । तेषु एव दिनेषु गुप्तचराणां द्वारा तेन ज्ञातं यत् - शिवमल्लः राजकुमार्याः लीलावत्याः अङ्गरक्षकत्वेन नियुक्तः अस्ति इति । इतःपरं यदि विलम्बः क्रियते तर्हि लीलावती मया न प्राप्येत इति विचिन्त्य विजयसेनः राज्ञे धीरसेनाय पत्रमेकं लिखितवान् ।

पत्रे सः एवं लिखितवान् - ''भवतः पुत्रीं लीलावतीम् अहं परिणेतुम् इच्छामि । अतः यावच्छीघ्रं मया सह तस्याः विवाहं निर्वर्तयतु । एतत् भवता न अनुमन्यते चेत् कैवल्यपुरं जित्वा वा अहं भवतः पुत्रीं परिणयेयम्'' इति । अनन्तरं भटद्वारा तत् पत्रं धीरसेनाय प्रेषितवान् सः ।

पत्रं पठितवतः धीरसेनस्य महान् आनन्दः जातः । सः पत्रं पुत्र्यै लीलावत्यै यच्छन् उक्तवान् - ''वत्से ! महाराजः विजयसेनः भवतीं परिणेतुम् इच्छति । भवती भाग्यवती'' इति ।

किन्तु पत्रं पठितवत्याः लीलावत्याः मुखं कोपाविष्टं जातम् । क्षणकालं मौनं स्थित्वा सा पितरम् उक्तवती - ''तात ! एतस्मात् पत्रात् ज्ञायते यत् मयि तस्य अनुरागः नास्ति इति । अधिकारः अस्ति इत्यतः सः विजयसेनः अस्माकं विषये दर्पं प्रदर्शयति इति यत् तत् तदीयं गर्वं द्योतयति । एतादृशान् अहङ्कारिणः देवः योग्यं



आवेशः किञ्चिदिव शान्तः । परस्परप्रीतिं विना सैन्यबलेन परिणयः उचितः न इति विवेकः तस्मिन् उदितः ।

पुत्र्या लीलावत्या लिखितं पत्रं पठित्वा विजयसेनः कोपेन मम राज्यस्य उपरि आक्रमणं कुर्यात् इति भीतिः आसीत् धीरसेनस्य । किन्तु द्वित्राः मासाः अतीताः चेदपि तादृशं किमपि न प्रवृत्तम् । एतस्मात् धीरसेनः चिन्तितवान् - 'विजयसेनः अन्यां काञ्चित् राजकुमारीं परिणयेत्' इति ।

पितुः एतं भावम् अवगत्य लीलावती पितरम् उक्तवती - ''तात ! मम चिन्तनानुगुणम् एव प्रवृत्तम् । मम पत्रं पठितवान् विजयसेनः मयि दृढानुरागवान् यदि अस्ति तर्हि युद्धप्रयत्नं परित्यजेत् इति मया चिन्तितम् आसीत् । तथैव प्रवृत्तम्'' इति ।

कदाचित् लीलावती सायङ्कालसमये उद्याने विहरन्ती आसीत् । तस्याः अङ्गरक्षकः शिवमल्लः उद्यानस्य द्वारे स्थितवान् आसीत्। उद्याने विहरन्ती लीलावती शुष्कपर्णानां मध्ये सुप्तवतः सर्पस्य उपरि अनवधानात् पदं स्थापितवती । अपरक्षणे एव सर्पः ताम् अदशत् । 'हा' इति क्रन्दन्ती लीलावती भूमौ पतितवती । तत्क्षणं शिवमल्लः तत्र आगत्य पार्श्वे एव गुल्मसमीपे वेगेन सरन्तं सर्पं दृष्ट्वा खड्गेन तं मारितवान् ।

लीलावती सर्पेण दष्टा इति ज्ञात्वा राजा, राज्ञी, लीलावत्याः सख्यः च तत्र आगतवन्तः । तावता शिवमल्लः राजवैद्यम् आनीतवान् । मृतं सर्पं दृष्ट्वा वैद्यः

दण्डयति । काले काले सर्वं भविष्यति । 'अन्ये अपि मत्सदृशाः एव मानवाः । तेषाम् अपि हृदयं, मनः, आत्मा च अस्ति' इति यः ज्ञातुं न शक्नोति तादृशं दुरहङ्कारिणं यदि अहं परिणेष्यामि तर्हि अहं सुखेन न जीविष्यामि'' इति ।

अनन्तरं सा विजयसेनाय पत्रमेकं लिखित्वा भटद्वारा प्रेषितवती । पत्रे एवं लिखितम् आसीत् - ''सद्यःकाले मम विवाहचिन्तनं नास्ति । क्षाम्यतु । बलात् अहं परिणेतव्या इति चिन्तनं परित्यजतु । महता सैन्येन भवान् अस्माकं राज्यं जयेत्, तावन्मात्रेण मम हृदयं जेतुं न शक्नोति इति जानातु । सम्यक् विचिन्त्य निर्णयं स्वीकरोतु'' इति ।

द्वित्रवारं पत्रं पठितवतः विजयसेनस्य

दिग्भ्रान्तः । यतः तां दष्टवान् सर्पः सामान्यः न आसीत् । वैद्यः सर्पेण दष्टे लीलावत्याः पादे किमपि औषधं लेपितवान् । अनन्तरम् उक्तवान् - ''महाराज ! किञ्चित्कालानन्तरं राजकुमारी सचेतना भविष्यति । किन्तु विषप्रभावेण सा शाश्वतम् अन्धा भविष्यति । यतः तां दष्टवान् सर्पः रक्तबीजनामकः महासर्पः । ईशान्यदिशि इतः पञ्चशतयोजनदूरे रक्तपिपासिनामकः पर्वतः अस्ति । तत्र एव एतादृशाः सर्पाः वसन्ति इति श्रूयते । तादृशः सर्पः अस्माकम् उद्याने प्रत्यक्षः जातः अस्ति इति तु महत् आश्चर्यकरम्'' इति ।




तावता सचेतना राजकुमारी लीलावती नेत्रे मार्जयन्ती सगद्गदा उक्तवती - ''शिवमल्ल ! अहं किमपि द्रष्टुं न शक्नोमिं । अहम् अन्धा अभवम्'' इति ।

एतत् श्रुत्वा शिवमल्लः किमपि उत्तरयितुम् अशक्तः सन् अपराधी इव शिरः अवनमय्य स्थितवान् ।

राज्ञी पुत्रीम् आलिङ्ग्य उच्चैः रोदनम् आरब्धवती । राजा दुःखं कथञ्चित् निगृह्णन् वैद्यं पृष्टवान् - ''राजकुमार्यै दृष्टिदानाय कोऽपि मार्गः एव नास्ति वा ?'' इति ।

तदा राजवैद्यः उक्तवान् - ''रक्तबीजसर्पेण दष्टानां नष्टदृष्टीनां दृष्टेः पुनः प्राप्त्यर्थम् एकः एव मार्गः आयुर्वेदग्रन्थे उक्तः अस्ति - सर्पगन्धिपुष्पेण राजकुमार्याः नेत्रस्पर्शः करणीयः इति'' इति ।

''किमर्थं तर्हि विलम्बः ? इदानीम् एव तत् कार्यं क्रियताम्'' इति उक्तवान् राजा ।

तदा राजवैद्यः आतङ्कमिश्रितस्वरेण उक्तवान् - ''राजन् ! एतत् कार्यं न तावत् सुकरम् । साहसिनः एव एतत् कार्यं कर्तुं समर्थाः, न तु सामान्याः । रक्तपिपासिपर्वतस्य समीपे कालिकालयः अस्ति । आलयस्य पार्श्वे सर्पगन्धिवृक्षः अस्ति । तस्मात् वृक्षात् तत् पुष्पम् आनेतव्यम् । बाल्ये पितामहमुखात् मया श्रुतम् आसीत् यत् - सः सर्पगन्धिवृक्षः पञ्चाशद्वर्षेषु एकवारं पुष्पितः भवति इति । अपि च एकवारम् एव तस्य पुष्पस्य उपयोगः भवति चिकित्सार्थम् इत्यपि मया श्रुतम् आसीत् । सामान्यतः शतपादपरिमितोन्नतं तं महावृक्षं परितः रक्तबीजसर्पाः सदा सञ्चरन्तः भवन्ति । तान्



सर्पान् निवार्य तस्य पुष्पस्य आनयनं दुस्साध्यं कार्यम्'' इति ।

एतत् श्रुत्वा राजा क्षणं विचिन्त्य - ''यः वीरः सर्पगन्धिपुष्पम् आनीय राजकुमार्याः दृष्टिदाने उपकारकः भवति तस्मै वीराय राजकुमारीं दत्त्वा विवाहं निर्वर्तयिष्यामि इति राज्ये सर्वत्र प्रकटनं कुर्वन्तु'' इति भटान् आज्ञापितवान् ।

तदा शिवमल्लः - ''महाराज ! अहं सर्पगन्धिपुष्पं सम्पाद्य आगमिष्यामि । कृपया माम् आशिषा अनुगृह्णातु'' इति उक्तवान् ।

''यशस्वी भव'' इति आशीर्वादं कृतवान् राजा । शिवमल्लः कञ्चित् उत्तमाश्वम् आरुह्य ततः वायुवेगेन रक्तपिपासिपर्वतस्य दिशि प्रस्थितवान् ।

एषा वार्ता गुप्तचराणां द्वारा विजयसेनेन ज्ञाता । तत्क्षणे एव सः अपि सर्पगन्धिपुष्पसम्पादनार्थं ततः प्रस्थितः ।

शिवमल्लः रात्रौ काश्चन घण्टाः यावत् वृक्षस्य अधः शयनं कृत्वा विश्रान्तिं स्वीकरोति स्म । पुनः दिने प्रयाणम् अनुवर्तयति स्म । सप्तदिनानां प्रयाणस्य अनन्तरं सः कालिकालयं प्राप्तवान् । तस्य पार्श्वे एव सर्पगन्धिवृक्षः आसीत् । उन्नतं तं वृक्षं परितः असंख्याः सर्पाः सञ्चरन्ति स्म । वृक्षे अधिकाः शाखाः पर्णानि वा न आसन् । वृक्षस्य अग्रभागे एकम् एव सर्पगन्धिपुष्पं कान्त्या प्रकाशमानम् आसीत् ।

रक्तबीजसर्पान् निवार्य वृक्षसमीपं गमनम् अशक्यम् इति विचिन्त्य शिवमल्लः तत् पुष्पम् एव लक्ष्यीकृत्य बाणप्रयोगं कृतवान् । पुष्पम् अधः पतितम् । अपरक्षणे एव सर्पाः पुष्पं परितः स्थितवन्तः । तदा किं करणीयम् इति अजानन् शिवमल्लः तथैव स्थितवान् ।

तावति काले शिवमल्लेन अश्वखुरशब्दः श्रुतः । किञ्चित्कालानन्तरम् अश्वारूढः विजयसेनः तत्र आगतवान् । सर्पाणां मध्ये पतितं पुष्पं दृष्ट्वा सः असूयया उक्तवान् - ''मत्तः पूर्वम् एव आगत्य भवान् पुष्पं पातितवान् खलु !'' इति ।

''भवान् अत्र आगच्छेत् एव इति मया ऊहितम् आसीत् । भवतः आगमनम् उत्तमम् अभवत् । महाराज ! पुष्पनिमित्तं वृक्षसमीपं मा गच्छतु भवान् । तत्र अपायः अस्ति'' इति वदन् शरवेगेन धावन्

सर्पगन्धिपुष्पसमीपं गत्वा यावत् पुष्पं स्वीकृतवान्, तावता रक्तबीजसर्पाः तं हस्ते दष्टवन्तः । तथापि कथमपि कष्टेन दोलायमानः शिवमल्लः पुष्पं गृहीत्वा विजयसेनसमीपम् आगतवान् । पुष्पं तस्मै दत्त्वा - 'महाराज ! एतेन पुष्पेण राजकुमार्याः अन्धत्वं निवार्य तां परिणीय सुखेन जीवतु' इति वदन् विषप्रभावात् मूर्च्छां गतः, पतितः च । किञ्चित्कालानन्तरं शिवमल्लः यद्यपि सचेतनः जातः, किन्तु अन्धः जातः आसीत् ।

विजयसेनः शिवमल्लम् आलिङ्ग्य - ''शिवमल्ल ! भवतः त्यागः अपूर्वः । भवन्तम् अन्यथा चिन्तितवन्तं मां क्षाम्यतु । मम आस्थाने न केवलम् आयुर्वेदपण्डिताः, अपि तु अनेके वैद्यशास्त्रनिपुणाः सन्ति । रक्तबीजसर्पदंशनस्य निवारकाणि औषधानि अन्यानि अपि स्युः इति मम विश्वासः । तैः औषधैः भवतः अन्धत्वं निवारयिष्यामि'' इति वदन् शिवमल्लम् स्वस्य अश्वस्य उपरि उपवेश्य तं राजधानीं नीतवान् ।

वेतालः एवं कथां समाप्य अवदत् - ''राजन् ! शिवमल्लस्य व्यवहारः असहजः इति भासते खलु ! राजकुमारी लीलावती परिणेतव्या इत्येव सः धीरसेनस्य आस्थानं प्रविष्टवान् । एवं सति सर्पगन्धिपुष्पं सम्पादितवता तेन राजकुमारी परिणेतव्या आसीत् । तादृशः सः स्वयम् अन्धः सन् सर्पगन्धिपुष्पं विजयसेनाय दत्तवान् यत् तत् तस्य मूर्खत्वं खलु द्योतयति ? विजयसेनस्य आगमनपर्यन्तम् अपि शिवमल्लः सर्पाणां मध्यतः पुष्पम् आनेतुं किमर्थं न उद्युक्तः ? 'भवान् पुष्पसमीपं मा गच्छतु' इति शिवमल्लः विजयसेनम् उक्तवान् । एतत् शिवमल्लस्य सङ्कुचित-मनोभावं सूचयति । तादृशम् अपि



विजयसेनः प्रशंसते । एतत् आश्चर्यं जनयति खलु ? आरम्भदिनेषु विजयसेनस्य चिन्तनम् आसीत् यत् बलात् वा राजकुमारी परिणेतव्या इति । किन्तु तया प्रेषितस्य पत्रस्य पठनस्य अनन्तरं तस्य व्यवहारः अन्यथा एव अभवत् । एतत् विचित्रम् इव भासते खलु ? एवं तर्हि लीलावत्यां विजयसेनस्य अनुरागः नास्ति इति स्पष्टम् अभवत् । तर्हि सः सर्पगन्धिपुष्पनिमित्तं किमर्थं यत्नं कृतवान् ? शिवमल्लविषयिकया असूयया वा ? एतेषां सन्देहानां समाधानं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः उक्तवान् – ''शिवमल्लः राजकुमार्याः निमित्तम् आस्थानं न प्रविष्टवान् । लीलावत्याः अपि शिवमल्ले अनुरागः न आसीत् । तस्य धनुर्विद्यानैपुण्यम् इष्टवती आसीत् लीलावती । सा स्वाभिमानिनी । अतः एव, अधिकारमदेन बलात् परिणेतुम् उद्युक्तम् अपि विजयसेनं पत्रद्वारा जागरितवती । तस्मिन् विवेकम् उत्पादितवती च । सर्पगन्धिपुष्पनिमित्तं विजयसेनः प्रयत्नं कृतवान् यत् तत् लीलावती-विषयकानुरागस्य साक्षिभूतम् अस्ति । शिवमल्लः बाणप्रयोगेण सर्पगन्धिपुष्पम् अधः पातितवान् । किन्तु ततः पुष्पस्य आनयनं सुलभं न आसीत् । सर्पाणां दंशनात् यदि अहम् अन्धः भविष्यामि तर्हि तत् पुष्पं राजकुमार्याः समीपं कः नयेत् ? इति चिन्ता आसीत् शिवमल्लस्य । विजयसेनः एतदर्थम् आगच्छेत् एव इति सः जानाति स्म । अतः एव सः विजयसेनस्य आगमनपर्यन्तम् अपि पुष्पस्य आनयनार्थम् न उद्युक्तः । विजयसेनः सर्पैः दष्टः न भवेत् इति विचिन्त्य पुष्पार्थं गच्छन्तं तं शिवमल्लः निवारितवान् । कर्तव्योन्मुखस्य शिवमल्लस्य त्यागमनोभावं ज्ञात्वा विजयसेनः, पूर्वम् अन्यथा चिन्तितम् आसीत् यत् तदर्थम् पश्चात्तापम् अनुभूतवान् । अपि च तं श्लाघितवान्'' इति ।

एवं वदतः राज्ञः मौनभङ्गः यदा जातः तदा शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान् ।



# कन्याकुमारी

रचना - मीरा नायर् ◆ चित्रम् - गोपकुमारः




सुन्दरं मौक्तिकमयं लक्षद्वीपं विहाय पुनः प्रधानभूभागं प्रत्यागच्छामः चेत् पद्मनाभपुरनामकं नगरं दृश्यते ।

पद्मनाभपुरं सद्यः तमिळनाडुराज्ये अस्ति चेदपि १६-१७ शतकयोः मध्ये तिरुवान्कूरुमहाराजस्य राजधानी आसीत् ।

पद्मनाभपुरस्य दुर्गमध्ये पद्मनाभपुरराजभवनम् अस्ति । एतस्य शतकस्य पूर्वार्धपर्यन्तं, तिरुवान्कूरुमहाराजाः अस्मिन् भवने एव वासं कृतवन्तः आसन् । पश्चिमतीरस्थेषु काष्ठशिल्पयुक्तेषु भवनेषु एतत् एव श्रेष्ठत्वेन परिगण्यते । आतपः, तापः वा अन्तः यथा न गच्छेत् तथा भवनस्य भित्तिनिर्माणं कृतम् अस्ति अत्र । अत्रत्या भूमिः दर्पणः इव प्रकाशते । एषा भूमिः नारिकेलावरणस्य अण्डाङ्गभूतस्य श्वेतभागस्य च मिश्रणेन सज्जीकृता अस्ति । महाराजस्य शयनमन्दिरे स्थितः पर्यङ्कः त्रिषष्टिविधैः औषधीयकाष्ठैः निर्मितः अस्ति । एतानि काष्ठानि पोर्चुगीस्जनैः उपायनीकृतानि इति श्रूयते । राज्ञ्याः पर्यङ्कः हस्तिदन्तैः निर्मितः ।

महाराजभवनस्य शिलास्तम्भस्य उपरि शिलया निर्मितः कन्दुकः अस्ति । सैन्यं प्रवेष्टुम् इष्टवतः परीक्षां कर्तुम् एतस्य उपयोगः क्रियते स्म । एतं शिलाकन्दुकं हस्तद्वयेन ये उन्नयन्ति स्म ते एव सैन्ये नियुक्तिम् अर्हन्ति स्म ।

पद्मनाभपुरतः दक्षिणभागे १६ कि.मी. दूरे सुचीन्द्रालयः अस्ति । एतस्मिन् मन्दिरपरिसरे एव १३

पद्मनाभपुरप्रासादस्य प्रवेशद्वारम्



*कन्याकुमारीदेवी*

आलयाः सन्ति इति तु अत्रत्यं वैशिष्ट्यम् । इन्द्रः स्वपाप परिहारार्थं सुचीन्द्रालये उष्णे घृते हस्तं स्थापितवान् इति कथा श्रूयते । केभ्यश्चित् शतकेभ्यः पूर्वम् अत्र विचित्रा पद्धतिः आसीत् । 'अपराधं कृतवान्' इति यस्मिन् संशयः भवति तेन आलयस्य अङ्गणे स्थिते ज्वलति भ्राष्ट्रे हस्तः स्थापनीयः आसीत् । आदिनम् उपवासं कृत्वा क्वथति तैले हस्तः स्थापनीयः इति नियमः आसीत् । यः एवम् अग्नौ हस्तं स्थापयति तस्य हस्ते ततः दिनत्रयाभ्यन्तरे अपि यदि शोथः न भवति तर्हि सः निरपराधी इति निर्णयः भवति स्म ।

१४ मी. उन्नताकारस्य आलयशिखरस्य अभिमुखं २,५०० वर्षेभ्यः पूर्वं स्थितः वृक्षप्रकाण्डः अस्ति । तस्मिन् प्रकाण्डे त्रिमूर्तिनां ब्रह्म-विष्णु-महेश्वराणां रूपाणि लिङ्गाकारेण सन्ति ।

आलयस्य अङ्गणे एव बृहत् हनुमद्विग्रहः अस्ति । जनाः एतस्य शिरसि गङ्गाजलेन अभिषेकं कुर्वन्ति । तत् जलं विग्रहस्य पादयोः समीपे सङ्गृहीतं भवति । तत् एव भक्तेभ्यः तीर्थरूपेण दीयते ।

देवालयस्य उत्तर- मण्डपे अखण्डशिलया निर्मिताः चत्वारः सङ्गीतस्तम्भाः सन्ति । स्तम्भेषु नालाकारिकाः शलाकाः सन्ति । एते ताड्यन्ते चेत् सङ्गीतं श्रूयते । न केवलं एतावत्, अपि तु काभ्यश्चित् शलाकाभ्यः जलतरङ्गनादः, काभ्यश्चित् मृदङ्गध्वनिः, अन्याभ्यः काभ्यश्चित् वीणानादः च श्रूयते ।

अस्माकं देशस्य दक्षिणाग्रे अरेबिया-समुद्रः, बङ्गालकोल्लिः, हिन्दुमहासागरः इति



एतेषां सङ्गमस्थाने सुप्रसिद्धकन्याकुमारी अस्ति ।

कन्याकुमारीसम्बद्धा काचित् विशिष्टा कथा अस्मिन् प्रदेशे श्रूयते । सुचीन्द्रनाथः कन्याकुमारीं परिणेतुम् इच्छन् स्वस्य अपेक्षां देवताः उक्तवान् । परन्तु 'यदि कन्याकुमारी विवाहिता भवेत् तर्हि स्वभक्तानां रक्षणे तस्याः शक्तिः न भवेत्' इति देवताः भीताः । अतः ते नारदं दृष्ट्वा - ''एतं विवाहं निवारयतु'' इति प्रार्थितवन्तः । एतत् अङ्गीकृत्य नारदः सुचीन्द्रं गत्वा सुचीन्द्रनाथं दृष्ट्वा - ''प्रातः कालाभ्यन्तरे विवाहः भवेत् । अन्यथा शुभमुहूर्तः नष्टः भविष्यति'' इति उक्तवान् । सुचीन्द्रनाथः स्वपरिवारेणः सह कन्याकुमारीं प्रति प्रस्थितवान् । परन्तु नारदः कुक्कुटरूपं धृत्वा कुक्कटध्वनिं कृतवान् । तं ध्वनिं श्रुत्वा - ''इदानीम् एव प्रातःकालः अभवत् । शुभमुहूर्तः अपगतः'' इति विचिन्त्य सुचीन्द्रनाथः प्रतिगतवान् ।

सुचीन्द्रनाथः न आगतवान् इति कोपेन कन्याकुमारी विवाहार्थं कृतानि भक्ष्याणि सर्वाणि समुद्रे क्षिप्त्वा तपः कर्तुं निर्गतवती । तथा क्षिप्ताः पाकपदार्थाः एव शुक्तिरूपेण, सिकतारूपेण च परिवृत्ताः इति कथा श्रूयते ।

कन्याकुमार्यां स्थिताः सिकताः हरित-कृष्ण-श्वेत-पाटल-नीलवर्णीयाः भवन्ति । सिकतासु मोनाजैट्, युरेनियम् इत्यादीनि अणुशक्तिजनकरासायनिकवस्तूनि सन्ति ।

महात्मगान्धिमहोदयस्य अस्थीनि यत्र स्थापितानि तत्र गान्धिमण्डपः अस्ति । कन्याकुमारयां स्थितेषु आकर्षणीय-भवनेषु गान्धीमण्डपः अन्यतमः । अत्र मध्यभागे प्रकाशमाना कृष्णवर्णीया शिला अस्ति । गान्धिवर्यस्य अस्थीनि कुत्र सन्ति इत्येतत् द्योतयति सा । तस्याः शिलायाः अभिमुखं मण्डपस्य छदौ एकं रन्ध्रम् अस्ति ।





प्रतिवर्षं गान्धि-जन्मदिने सूर्यकिरणाः तेन रन्ध्रेण आगत्य कृष्णवर्णीय-शिलायाः उपरि पतित्वा विशिष्टां कान्तिं सृजन्ति । रमणीयम् एतत् दृश्यं द्रष्टुं तस्मिन् दिने अधिकसङ्ख्यया जनाः आगच्छन्ति ।

कन्याकुमार्या शिवम् उद्दिश्य यत्र तपः कृतः, स च



विवेकानन्दस्मारकशिला



*गान्धिमण्डपः*

पर्वतः समुद्रतीरतः ६ कि.मी. दूरे अस्ति ।

नवभारतनिर्माता स्वामिविवेकानन्दः एतस्मिन् पर्वते एव १८९२तमे डिसम्बर् मासे अहर्निशं दिनत्रयं यावत् ध्यानं कृतवान् आसीत् ।

१९७०तमे वर्षे विवेकानन्दकेन्द्रेण अत्र विवेकानन्दस्मारकशिला (राक् मेमोरियल्) निर्मिता ।

विवेकानन्दशिलासमीपे एव अन्या शिला अस्ति । एतस्याः उपरि ३ मीटरोन्नतस्य तिरुवळ्ळुवर-विग्रहस्य प्रतिष्ठापनार्थं सज्जता प्रचलन्ती अस्ति । तमिळुवेदः इति प्रसिद्धस्य 'तिरुक्कुरळ्'ग्रन्थस्य कर्ता अस्ति तिरुवळ्ळुवर्वर्यः ।

'मरुदमले'नामकः पर्वतः कन्याकुमार्याः समीपे एव अस्ति । तस्मिन् आयुर्वेद-औषधनिर्माणार्थम् अपेक्षितानि सस्यानि उपलभ्यन्ते । एतस्य पर्वतस्य विषये काचित् कथा अपि श्रूयते - ''रामरावणयुद्धसमये लक्ष्मणः अचेतनः जातः आसीत् । लक्ष्मणं रक्षितुं रामस्य आज्ञायाः अनुसारं सञ्जीविनीसस्यम् आनेतुं हनुमान् हिमालयपर्वतं गतवान् । परन्तु तत्र किं सस्यम् आनेतव्यम् इत्यत्र हनुमतः भ्रमः जातः । अतः सः पर्वतम् एव उन्नीय आनीतवान् । तथा आनयनसमये सञ्जीविनीपर्वततः एकः खण्डः अधः पतितः । सः एव खण्डः 'मरुदमले' इति नाम्ना ख्यातः अभवत् । अत्रत्यं शिवलिङ्गम् हनुमता एव प्रतिष्ठापितम् इति जनानां विश्वासः अस्ति ।





# मानपूजापहारः

विजयनगरे रामशास्त्री नाम कश्चन पुरोहितः आसीत् । तस्य पुत्रीद्वयम् आसीत् । तथापि 'सद्गतिप्रापकः पुत्रः नास्ति खलु' इति तस्य महती चिन्ता आसीत् ।

एकदा पार्श्वग्रामात् शिवपुरात् नारायणनामकः पुरोहितः विजयनगरे क्रियमाणस्य विवाहस्य निमित्तं पुरोहितरूपेण आगत्य रामशास्त्रिणः गृहे वासं कृतवान् । तदा रामशास्त्री स्वस्य पुत्राहित्यजनितां व्यथां खेदेन तं निवेदितवान् ।

तदा नारायणः - "अस्माकं ग्रामे मारिकाम्बा नाम ग्रामदेवता अस्ति । रथोत्सवस्य समये कलशं शिरसि संस्थाप्य आलयस्य पुरतः अग्निकुण्डे ज्वलताम् अङ्गाराणाम् उपरि पदानि स्थापयन् यः यं सन्तानं मनसि याचते तं सन्तानं निश्चयेन प्राप्नोति सः । तत्रत्यविशेषता नाम जातिभेदं विना यः कोऽपि गोकुलाष्टम्याः अनन्तरं प्राप्यमाणे दशमीदिने मारिकाम्बारथोत्सवे तप्ताङ्गाराणाम् उपरि सञ्चारं कृत्वा इष्टसिद्धिं प्राप्तुम् अर्हति । अहम् अपि पुत्रीद्वयस्य अनन्तरं पुत्रप्राप्त्यर्थम् एवम् एव कृतवान्" इति उक्तवान् ।

नारायणेन उक्तं सर्वं श्रुत्वा रामशास्त्रिणः मनसि अपि अपेक्षा उद्भूता यत् एवं कृत्वा वा मया पुत्रः प्राप्तव्यः एव इति ।

केषाञ्चित् सप्ताहानाम् अनन्तरम् आगतस्य गोकुलाष्टमीपर्वणः दिने कृष्णस्य पूजां कृत्वा रामशास्त्री शिवपुरग्रामं प्रति प्रस्थितवान् । सः सायङ्कालाभ्यन्तरे रामगिरिग्रामं प्राप्तवान् । ततः द्वियोजनदूरे शिवपुरग्रामः आसीत् । तस्मिन् समये आकाशे मेघाः सम्मिलिताः अभवन् । एतत् दृष्ट्वा - 'अद्य रामगिरिग्रामे वासः एव उचितः' इति रामशास्त्री निर्णीतवान् ।



''अहं पुरोहितः'' इति सः स्वपरिचयम् उक्तवान् इति कारणतः ग्रामजनाः तं ग्रामपुरोहितस्य गृहं नीत्वा परिचयं कारितवन्तः । रामगिरिग्रामस्य पुरोहितः भद्रदेवः तम् आदरेण स्वागतीकृतवान् ।

रामशास्त्रिणः शिवपुरग्रामगमनस्य कारणं श्रुत्वा भद्रदेवः तम् आश्चर्येण पश्यन् - ''स्वामिन् । इदानीम् एव भवतः पुत्रीद्वयम् अस्ति । अग्निकुण्डे पद-स्थापनानन्तरं दैवकरुणया पुत्रजननं भवति चेत् उत्तममेव । परन्तु यदि पुत्र्याः जननं भविष्यति तर्हि तिसृणां विवाहादिकं कर्तुं भवता शक्यते किम् ?'' इति पृष्टवान् ।

''यः जन्म ददाति सः एव पोषणमपि करोति । अतः पुत्री जाता चेदपि न काऽपि चिन्ता मम । किन्तु अपुत्रस्य गतिः नास्ति इति शास्त्राणि वदन्ति खलु ? अतः पुत्रप्राप्तौ इच्छा मम'' इति उक्तवान् रामशास्त्री ।

एतत् श्रुत्वा भद्रदेवः हसन् मौनम् उपविष्टवान् । तदा भोजनार्थम् आह्वानम् आगतम् । उभौ अपि पीठे उपविष्टवन्तौ । भद्रदेवस्य पुत्री रमादेवी भोजनं परिवेषयन्ती आसीत् । रामशास्त्री - ''भवतः कति अपत्यानि ?'' इति भद्रदेवं पृष्टवान् ।

तदा रमादेवी एव उक्तवती - ''स्वामिन् । मम पितुः एकमात्रपुत्री अहमेव । मम एकः अग्रजः आसीत् । पुत्रात् एव स्वर्गप्राप्तिः इति चिन्तयन्, अग्निकुण्डे सञ्चारं कृत्वा वरं सम्प्रार्थ्य मम पिता पुत्रं प्राप्तवान् आसीत् । परन्तु विंशतिवर्षाभ्यन्तरे एव सः पुत्रः मरणं प्राप्तवान् । मम अग्रजः मृतः इति कारणात् एव माता अपि दिवं गता । पौरोहित्यमेव मम पितुः जीवनाधारः । कञ्चित् युवकम् अन्विष्य मम विवाहं निर्वर्त्य जामातरं पौरोहित्यं बोधितवान् अस्ति एषः । पार्श्वग्रामे प्रचलतः विवाहस्य पौरोहित्यं कर्तुं मम पतिः अद्य गतवान् अस्ति'' इति ।

एतानि वचनानि श्रुत्वा रामशास्त्रिणः मनसि करुणा उत्पन्ना । अद्य भोजनं ये दत्तवन्तः तेषां यथा सन्तोषः भवेत् तथा मया सम्भाषणीयम् इति सः चिन्तितवान् । अतः सः रमादेवीम् उक्तवान् - ''पुत्रि । मौनेन भोजनं करणीयम् इति शास्त्रनियमः । तथापि एतस्मिन् सन्दर्भे अहं द्वित्राणि वाक्यानि वक्तुम् उत्सुकः अस्मि । शक्त्या युक्त्या च लोके स्त्री-पुरुषौ उभौ

अपि समानौ एव । बुद्धिप्रदात्री सरस्वती स्त्री । सम्पत्तेः सङ्केतरूपेण स्थिता लक्ष्मीः अपि स्त्री एव । 'अपुत्रस्य गतिः नास्ति' इत्यादिषु वचनेषु विश्वसन्तः बहवः पुत्रम् इच्छन्ति । एतस्य तात्पर्यम् एतत् न भवति यत् पुत्री अवरा इति । योग्यशिक्षणं दत्तं चेत् पुत्री अपि पुत्रवत् समर्था भवितुम् अर्हति एव । अग्निकुण्डे सञ्चारस्य अनन्तरम् अपि यदि मम पुत्री एव भवेत् तर्हि ताम् अहं पुत्रम् इव एव पोषयिष्यामि । अन्नब्रह्मणः पुरतः उक्तम् एतत् वचनं कदापि मिथ्या न भविष्यति'' इति ।

''भवतः पुत्रः भविष्यति एव । तथापि पुत्र्यः अपि पुत्रसमानाः, पुत्रः नास्ति चेत् अपि चिन्ता नास्ति इति विश्वासः भवतु इति केवलं मम प्रार्थना'' इति उक्तवती रमादेवी ।

परेद्युः प्रातः एव रामशास्त्री शिवपुरं गत्वा नारायणस्य साहाय्येन मारिकाम्बा-देवालयस्य अर्चकेन मिलित्वा, अग्निकुण्डे सञ्चारं कृत्वा स्वग्रामं प्रतिगतवान् ।

'यदि पुत्र्याः जननं भविष्यति तर्हि तां पुत्रमिव पालयिष्यमि' इति अन्नं गृह्णन् प्रमाणं कृतवान् इति कारणतः, काकतालीयतया वा इति न ज्ञायते, ततः वर्षाभ्यन्तरे रामशास्त्रिणः पुत्रः, पुत्री च जातौ । आश्चर्यं नाम तौ यमलौ रूपविषये, अभिरुचौ चापि साम्यम् एव वहतः स्म ।

रामशास्त्री रामगिरिग्रामे भोजनसमये आत्मना उक्तं वचनं स्मरन् - ''मातः ! पुत्रं पुत्रीं चापि दत्तवती अस्ति भवती । वरपुत्रं यथा तथैव वरपुत्रीम् अपि समानदृष्ट्या एव



पालयिष्यामि'' इति स्वगतम् उक्त्वा शिवः, रमा चेति तयोः नाम निश्चितवान् ।

अन्येषाम् अभिप्रायम् अपरिगणयन् रामशास्त्री उभयोः कृते अपि उत्तमशिक्षणं दत्तवान् । द्वौ अपि अहमहमिकया पठन्तौ बहुषु शास्त्रेषु पण्डितौ जातौ । तौ शुभमुहूर्ते सञ्जातौ इति कारणतः स्यात्, दिने दिने रामशास्त्री धनिकः जातः । प्रथम-द्वितीयपुत्र्योः विवाहम् अपि विना कष्टेन कृतवान् सः ।

इदानीं शिवः रमा च तारुण्यं प्राप्तवन्तौ स्तः । 'उत्तमसम्बन्धम् अन्विष्य एतयोः विवाहः करणीयः' इति रामशास्त्री चिन्तितवान् । शिवः रमा च स्वपाण्डित्येन प्रतिभया च पण्डितपामरादीन् सर्वान् रञ्जयन्तौ 'उत्तमकवी' इति प्रसिद्धिं

प्राप्तवन्तौ । भूस्वामिनां पुरतः आशुकवितां वदन्तौ, तेषां श्लाघनं प्राप्नुवन्तौ तौ सर्वान् आश्चर्यचकितान् कुरुतः स्म ।

अथ कदाचित् कश्चन भूस्वामी तौ स्वस्य आस्थानं प्रति आहूतवान् । तदा अपि तौ आशुकविताः कथयन्तौ सर्वेषां श्लाघनं प्राप्तवन्तौ । परन्तु आस्थाने स्थितः कश्चित् कविः भूस्वामिनम् उद्दिश्य - ''प्रभो, पामराणां रञ्जनं सुलभम् । किन्तु वस्तुतः कवित्वं पाण्डित्यं वा तदा एव सिद्ध्यति, यदा च समर्थेन पण्डितेन आयोज्यमानायां परिक्षायाम् उत्तीर्णता प्राप्यते । एतस्मात् कारणात् एतयोः पाण्डित्यस्य परीक्षार्थं मया समस्या काचित् दीयते । मारः, नरः, पूरः, जारः, परः, हारः इत्येतानि पदानि उपयुज्य एताभ्यां कश्चन श्लोकः रचनीयः । 'किं दुस्सङ्गात् भवति महताम्' इत्यस्य उत्तरम् अपि वक्तव्यम् । एवं क्रियते चेदेव अहम् एतयोः पाण्डित्यम् अङ्गीकरोमि'' इति उक्तवान् ।

तदा शिवः रमा च एकं श्लोकम् उक्तवन्तौ -

''को निर्दग्धस्त्रिपुररिपुणा, कश्च कर्णस्य हन्ता ।

नद्याः कूलं विघटयति कः, कः परस्त्रीरतश्च ।।

कः सन्नद्धो भवति समरे, भूषणं किं कुचानाम् ।

किं दुस्सङ्गात् भवति महतां मानपूजापहारः ।।'' इति ।

एतत् श्रुत्वा सः कविः सन्तोषं प्रकटयन् - ''साधु । शिवेन कः दग्धः, कर्णस्य मारयिता कः, नद्याः तीरं कः नाशयति, परस्त्रीरतः कः, कः युद्धे सन्नद्धः भवति, स्त्रीणां भूषणं किम् इत्येतेषाम् उत्तरं - 'मानपूजापहारः' इति एकेन एव पदेन सूचितवन्तौ एतौ । तच्च पदं-'किं दुस्सङ्गात् भवति महताम्' इत्यस्य उत्तरम् अपि अस्ति । पूर्वम् उपस्थापितानां पश्नानाम् उत्तराणि तावत् - मारः,नरः, पूरः, जारः, परः, हारः चेति । एतयोः प्रतिभा निश्चयेन अपूर्वा'' इति वदन् तौ श्लाघितवान् ।

नितरां सन्तुष्टः भूस्वामी अपि तौ विशेषतः सत्कृत्य - ''इतोऽप्यतिशयकीर्तिं प्राप्य चिरकालं जीवतां भवन्तौ'' इति आशिषा अनुगृह्य प्रेषितवान् ।



# सुवर्ण-समयः -८





१ राजस्थानराज्ये स्थितेषु अपूर्वदेवालयेषु एतत् अपि अन्यतमम् । एतत् १४३९तमे वर्षे निर्मितम् । अत्र १४४४ स्तम्भाः, २९ प्रकोष्ठाः च सन्ति । अत्रत्येषु स्तम्भेषु कोऽपि अन्यसदृशः नास्ति । तन्नाम ते सर्वे आकारेण परस्परं भिन्नाः एव । एतस्य आलयस्य नाम किम् ?कुत्र च अस्ति एतत् ?



२ एतत् शिवलिङ्गं समुद्रस्तरात् १३,००० पादपरिमिते उन्नते स्थले हिमपर्वतमध्ये अस्ति । एतत् स्वयं हिममयम् अपि । एतत् चन्द्रः इव शुक्लपक्षे वर्धते, कृष्णपक्षे क्षीयते च । एतत् शिवमन्दिरं कुत्र अस्ति ?



३ वामतः स्थिता लिपिः सिन्धुसंस्कृतिसम्बद्धैः जनैः उपयुज्यमाना अस्ति । एतस्याः अर्थः अद्यावधि अज्ञातः एव अस्ति । दक्षिणभागे स्थितायाः लिप्याः एतस्याः च विशेष-साम्यम् अस्ति । एवं तर्हि दक्षिणभागस्था लिपिः कैः उपयुक्ता ?



 

# चित्रस्य मुद्रणम्




अपेक्षितः आकारः कागदे, वस्त्रे, उपधानावरणे, अन्यत्र वा सुलभतया मुद्रयितुं शक्यः । क्रमः अपि न अतिकठिनः ।



१. स्थूलं कागदं प्लास्टिक्-पत्रं वा स्वीकृत्य तदुपरि सरलं स्थूलं च आकारम् आदौ चित्रयन्तु ।

२. ततः चित्रस्य अन्तर्भागं कर्तयित्वा क्षिपन्तु । इदानीं भवतां स्टेन्सिल्-साधनं सिद्धम् ।

३. ततः नातिद्रवमयं वर्णं सज्जी-कुर्वन्तु । यः आकारः कर्तितः अस्ति तं मुद्रणीयस्य कागदस्य वस्त्रस्य वा उपरि स्थापयन्तु । ततः तत् यथा न कम्पेत तथा गृहीत्वा वर्णलेपनं कुर्वन्तु । वर्णलेपनार्थं दृढः कूर्चः कार्पासमयकौशेयं वा उपयोक्तुं शक्यम् ।



४. एतम् एव आकारं कागदस्य उपरि योग्यक्रमेण अन्यत्र अपि चित्रयन्तु ।

५. वस्त्रस्य उपरि जेर्सिवस्तुनः उपरि वा चित्रस्य चित्रणार्थं फेब्रिक्वर्णः उपयोक्तव्यः भवति । स्मर्तव्यं यत् यत्र चित्रं चित्र्यते तत् वस्त्रम् अन्यवस्तु वा समतलं स्यात् । अतः वस्त्रं कार्ड्बोर्ड् उपरि पत्रसूचीभिः सुदृढं संलग्यते चेत् वरम् ।

## चित्रं विशालीकुर्वन्तु



चित्रस्य विशालीकरणार्थं क्रमाः अधोनिर्दिष्टाः सन्ति

१. अङ्कनीं मापनपट्टिकां च स्वीकृत्य विशालीकर्तुम् इष्टस्य चित्रस्य उपरि १सें.मी. परिमाणकानि चतुरस्राणि लिखन्तु ।

२. ततः चित्रीयपत्रे तावन्ति एव २ सें.मी. परिमाणकानि चतुरस्राणि लिखन्तु ।

३. लघुचित्रं दृष्ट्वा जागरूकतया तत्तच्चतुरस्रे स्थिताः रेखाः तत्तच्चतुरस्रे एव लिखन्तु, येन विशालं चित्रं सिद्ध्येत् ।



६घ

## निर्मीयन्तां पेङ्गविन् कट् औट्

१. दृढपत्रे पेङ्गविन्पक्षिणः चित्रं पार्श्वस्थचित्रम् अनुकुर्वन्तः लिखन्तु । अथवा पार्श्वस्थचित्रस्य विशालीकृतप्रतिकृतिं वा सम्पादयन्तु ।

२. ततः चित्रेतरभागं कर्तयित्वा क्षिपन्तु । रक्तरेखा यत्र तत्रापि कर्तयन्तु ।

३. यत्र बिन्दुरेखाः सन्ति तत्र पुटीकुर्वन्तु । कण्ठभागे अन्तर्मुखं पुटीकुर्वन्तु । पक्षभागं पादभागं च बहिर्मुखं कुर्वन्तु । इदानीं पेङ्गविन्पक्षिणः कट्औट् सिद्धम् अस्ति खलु ?



# चित्र्यताम् उष्ट्रं – त्रिभिः सरलैः क्रमैः



## सुवर्णसमयस्य (७) उत्तराणि



१. एतस्य नाम गोलगुम्बज् इति । बिजापुरं परिपालितवतः आदिल्शाहवंशीयस्य सप्तमराजस्य अहम्मद्-आदिल्शाह्-स्मारकम् एतत् । प्रपञ्चे वैशाल्येन द्वितीयम् एतत् ।

२. जाटिङ्गा इति । असमराज्ये अस्ति स च ग्रामः ।

३. बहायीमतीयानां प्रार्थना-मन्दिरम् एतत् । १९ शतके पर्शियन् धर्मगुरुः बहा उल्ला एतस्य मतस्य संस्थापकः ।



४. राक्षसगोधिकाया भागाः गजाकारेण योजिताः सन्ति अत्र ।



चित्राणां योजनक्रमः –
१,८,४,५,६,२,१०,७,९,३,




हनुमान् कदलीवने शयानः आसीत् । तस्य मुखं रक्तवर्णीयं, नेत्रद्वयं हरितवर्णीयं च दृश्यते स्म । सुवर्णवर्णीयं शरीरम्, बृहत् भ्रूद्वयं च आसीत् तस्य । मार्गे शयानं तादृशं हनुमन्तं दृष्टवतः भीमस्य किञ्चित् अपि भयं न अभवत् । सः हनुमतः समीपम् आगत्य सिंहनादं कृतवान् ।

हनुमान् नेत्रे उद्घाट्य भीमं दृष्ट्वा - ''वत्स ! अहं वृद्धः अस्मि । मम ज्वरः अपि अस्ति । श्रान्तं निद्रां कुर्वन्तं मां किमर्थं भवान् उत्थापितवान् ? मादृशं वानरं मानवः भवान् किमर्थं पीडयति ? ज्येष्ठेभ्यः कथं गौरवं दातव्यम् इति भवता न ज्ञातं वा ? भवान् किमर्थम् एकाकी सन् एवम् अटन् अस्ति । इतोऽपि अग्रे स्थिते मार्गे देवताः सञ्चरन्ति । तत्र मानवैः न गन्तव्यम् । मम वचनं श्रुत्वा भवान् प्रतिगच्छतु'' इति उक्तवान् ।

''अहं भीमनामकः क्षत्रीयः । कुरुवंशे मम जन्म जातम् । भवान् कः ? भवान् किमर्थं वानररूपं धृतवान् अस्ति ? मार्गं त्यजतु तावत्'' इति उक्तवान् भीमः ।

तदा हनुमान् उक्तवान् - ''अहं वानरः अस्मि । मार्गं न त्यजामि । मया सह कलहं विना प्रतिगमनं क्षेमकरम्'' इति ।

''भवान् मार्गं न त्यजति चेत् भवता सह अहं कलहं कृत्वा मार्गं कल्पयित्वा अग्रे गमिष्यामि'' इति उक्तवान् भीमः ।

''वत्स ! अहं वृद्धः अस्मि । रुग्णः अपि अस्मि । अतः इतस्ततः चलितुं न शक्नोमि अहम् । यदि गन्तव्यम् एव इति अस्ति तर्हि भवान् माम् अतिक्रम्य गच्छतु नाम'' इति भीमम् उक्तवान् हनुमान् ।

तदा भीमः - ''तथा अतिक्रम्य गमनं दोषाय भवति । अन्यथा यथा हनुमान् समुद्रम् उल्लङ्घ्य गतवान् तथा अहम् अपि



गच्छेयम्'' इति उक्तवान् ।

''सः हनुमान् कः ? सः किमर्थं समुद्रम् उल्लङ्घ्य गतवान् ?'' इति कृत्रिमकुतूहलेन पृष्टवान् हनुमान् ।

''अहम् इव हनुमान् अपि वायुपुत्रः । सः अत्यन्तं वीरः चिरब्रह्मचारी च । हनुमान् दुष्टशिक्षकः, शिष्टरक्षकः चापि । श्रीरामलक्ष्मणयोः प्रियः सेवकः सः । श्रीरामसीतालक्ष्मणानां वनवाससमये अहर्निशं तैः सह स्थितवान् आसीत् सः । धीरः सः मम अग्रजः । रामस्य पत्नीं यदा रावणः नीत्वा लङ्कायां स्थापितवान् तदा हनुमान् तस्याः अन्वेषणार्थं समुद्रम् उल्लङ्घ्य लङ्कां गतवान् । अहम् अपि हनुमान् इव शक्तिमान् अस्मि । भवान् मार्गं त्यजतु । अन्यथा अग्रे भवता कष्टम् अनुभोक्तव्यं भवेत्'' इति उक्तवान् भीमः ।

हनुमान् भीमस्य अहङ्कारं दृष्ट्वा हसन् - ''वत्स ! भवान् मां किमर्थं पीडयति ? अहं मार्गपार्श्वे अस्मि । मम पुच्छमात्रं मार्गे अस्ति । माम् अतिक्रम्य गन्तुम् इच्छा नास्ति चेत् मम पुच्छं पार्श्वे अपसार्य गच्छतु नाम भवान्'' इति उक्तवान् ।

भीमः औदासीन्येन हनुमतः पुच्छं वामहस्तेन उन्नेतुं प्रयत्नं कृतवान् । परन्तु पुच्छस्य किञ्चित् अपि चलनं न अभवत् । भीमः आश्चर्यचकितः । सः हस्तद्वयेन स्वपूर्णशक्त्या पुच्छम् उन्नेतुं प्रयत्नं कृतवान् । तथापि साफल्यं न प्राप्तम् । एतस्मात् भीमः नितरां लज्जितः । सः हनुमन्तं नमस्कुर्वन् - ''स्वामिन् ! अहङ्कारिणं मां क्षाम्यतु । भवान् सामान्यः न । गन्धर्वः वा, संन्यासी वा स्यात् । कृपया भवान् स्वकथां श्रावयतु । मां स्वस्य शिष्यं भावयतु'' इति उक्तवान् ।

तदा हनुमान् - ''भीम ! अहम् एव हनुमान् । वालिसुग्रीवयोः यदा वैरत्वं जातं तदा सुग्रीवः स्वसाहाय्यार्थं मम सख्यं सम्पादितवान्'' इति वदन् रामायणकथां श्रावितवान् ।

अनन्तरं हनुमान् - ''अहम् अत्रैव वसामि । अत्र गन्धर्वाः, विद्याधराः च प्रतिदिनं रामकथां पद्यरूपेण गायन्तः भवन्ति । तत् शृण्वन् अहं सन्तोषेण समयं यापयन् अस्मि । अत्र मानवाः न सञ्चरन्ति । भवान् किमर्थम् अत्र आगतवान् ?'' इति पृष्टवान् ।

भीमः हनुमन्तं साष्टाङ्गं नमस्कृत्य -

"स्वामिन् ! भवतः दर्शनेन अद्य मम जीवनं सार्थकं जातम् । समुद्रोल्लङ्घनसमये भवतः यत् रूपम् आसीत् तत् अहं द्रष्टुम् इच्छामि" इति उक्तवान् ।

"तदानीन्तनरूपम् अद्य दर्शयितुं शक्यते वा ? कालानुगुणं सर्वस्य परिवर्तनं भवति एव खलु ?" इति उक्तवान् हनुमान् । तथापि भीमः अनुरोधपूर्वकं प्रार्थितवान् यत् तत् रूपं दर्शनीयम् एव इति ।

तदा हनुमता स्वशरीरं भयङ्करं वर्धितम् । तस्य शरीरं कदलीवनम् आक्रम्य आकाशं स्पृशति स्म इव । सः सूर्यः इव प्रकाशते स्म । तदीये नेत्रे अपि अग्निः इव प्रज्वलतः स्म । दन्ताः दीर्घाः क्रूराः च दृश्यन्ते स्म । पुच्छं दीर्घं सत् भूमिं स्पृशति स्म ।

तदा हनुमान् भीमम् उक्तवान् - "वत्स ! मम रूपं दृष्टवान् खलु ? भवान् इच्छति चेत् इतोऽपि मम रूपं वर्धयिष्यामि । शत्रूणां पुरतः इतोऽपि भयङ्करः भवेयम् । भवान् तत् रूपं द्रष्टुं न शक्नुयात्" इति ।

भीमः - "महात्मन् ! भवतः एतत् रूपम् एव द्रष्टुं न शक्यते मया । मम दृष्टिः पराहता अस्ति । भवतः एतत् रूपम् उपसंहरतु कृपया" इति उक्तवान् ।

तदा हनुमान् स्वसामान्यरूपं धृत्वा भीमम् आलिङ्ग्य - "वत्स ! भवान् एतेन मार्गेण गच्छति चेत् सौगन्धिकावनं प्राप्नोति । भवतः शुभं भवतु । यदा कष्टम् आपतति तदा मां स्मरतु । भवान् साहसेन सौगन्धिकापुष्पं यदि अवचिनुयात् तर्हि देवताभिः सह कलहः करणीयः भवेत्" इति उक्त्वा अदृश्यतां गतः ।




द्विगुणितेन उत्साहेन भीमः अग्रे गत्वा पर्वतयोः मध्ये प्रवहन्त्याः नद्याः तीरे सौगन्धिकावनं दृष्टवान् । तत्र विकसितानि सौगन्धिकापुष्पाणि सुगन्धयुक्तानि, सुन्दराणि च आसन् । द्रौपद्याः इच्छां पूरयितुं भीमः तत् पुष्पम् अवचेतुं यावत् उद्युक्तः तावता भयङ्कराः राक्षसाः, रक्षकाः च आयुधानि गृहीत्वा तत्र आगत्य भीमं गृहीतवन्तः । "भवान् अत्र किमर्थम् आगतवान् ?" इति पृष्टवन्तः च ।

"अहं कुरुवंशीयः । पाण्डुराजस्य पुत्रः । धर्मराजस्य अनुजः च । एतानि सौगन्धिकापुष्पाणि स्वीकर्तुम् अहम् आगतवान् अस्मि" इति उक्तवान् भीमः ।

"एतत् कुबेरस्य वनम् । अत्र मानवैः न आगन्तव्यम् । कुबेरस्य अनुमतिं स्वीकृत्य




एतं विषयं तं सूचितवन्तः च ।

''भीमः पुष्पाणि अवचिनोतु नाम । अत्र मम विरोधः नास्ति । भवन्तः अपि मौनं तिष्ठन्तु'' इति राक्षसान् उक्तवान् कुबेरः ।

तदनन्तरं राक्षसाः प्रत्यागत्य यावत् दृष्टवन्तः तावता भीमः सौगन्धिकापुष्पाणि अवचिन्वन् आसीत् ।

एतावता धर्मराजः भीमस्य अनुपस्थितिं दृष्ट्वा - ''द्रौपदि ! भीमः कुत्र गतवान् ? भवती तं कुत्रापि प्रेषितवती वा ?'' इति तां पृष्टवान् ।

''सौगन्धिकापुष्पनिमित्तम् ईशान्यदिशि भीमः गतवान्'' इति उक्तवती द्रौपदी ।

तदा घटोत्कचः स्वपरिवारेण सह तत्र आगत्य भीमः यत्र आसीत् तत्र पाण्डवान् प्रापितवान् । तदा भीमः द्रौपद्यै सौगन्धिकापुष्पं दत्तवान् । पाण्डवाः कुबेरस्य अनुमतिं स्वीकृत्य अर्जुनस्य प्रतीक्षां कुर्वन्तः गन्धमादनपर्वतस्य उपरि स्थितवन्तः । अनन्तरं घटोत्कचः तान् सर्वान् नारायणाश्रमसमीपं प्रापय्य तेषाम् अनुज्ञां प्राप्य परिवारेण सह स्वोद्दिष्टं स्थानं गतवान् ।

एवं सति एकदा जटासुरनामकः राक्षसः द्रौपद्याः अपहरणार्थं ब्राह्मणवेषं धृत्वा धर्मराजस्य समीपम् आगतवान् । ''अहं परशुरामस्य शिष्यः अस्मि । सकल-शास्त्राणि, अस्त्रविद्यां च अधीतवान् अस्मि अहम्'' इति उक्तवान् च ।

धर्मराजः जटासुरस्य वचने विश्वस्य आत्मना सह वासं कर्तुं तस्मै अनुमतिं दत्तवान् । एकदा भीमः मृगयार्थं गतवान्

यथेष्टं पुष्पाणि स्वीकरोतु तावत्'' इति उक्तवन्तः राक्षसाः ।

तदा भीमः - ''कुबेरः कुत्र अस्ति इति अहं न जानामि । एतेषां पुष्पाणां निमित्तं मया अन्यः किमर्थं याचनीयः ? अहं क्षत्रियः अस्मि । यत् इच्छामि तत् स्वशक्त्या एव सम्पादयामि । एतत् कुबेरस्य सरोवरं तु नास्ति । एतत् सर्वं भगवतः सृष्टिः । अत्र परस्परं याचनं किमर्थम् ?'' इति तान् उक्तवान् ।

राक्षसानां विरोधम् अपि अविगणय्य भीमः सौगन्धिकापुष्पसरोवरम् अवतीर्ण-वान् । एतत् दृष्ट्वा राक्षसाः भीमेन सह युद्धं कर्तुम् उद्युक्ताः । भीमः गदया तेषाम् उपरि प्रहारं कृतवान् । केचन मृताः अपि । केचन ततः धावन्तः कुबेरस्य समीपं गतवन्तः ।



आसीत् । रोमशः, धौम्यः, अन्ये मुनयः च आश्रमतः अन्यत्र गतवन्तः आसन् । तस्मिन् समये जटासुरः पाण्डवानाम् आयुधानि चोरयित्वा, त्रीन् पाण्डवान्, द्रौपदीं च अपहृत्य धावितवान् । सहदेवः कथञ्चित् तस्य भुजात् अवतीर्य राक्षसेन चोरितेषु आयुधेषु एकं स्वीकृत्य भीमस्य नाम उच्चैः वदन् राक्षसम् अनुसृत्य धावितवान् ।

धर्मराजः - ''भोः, दुष्टः भवान् किमर्थम् एवम् अधर्मकार्यं करोति ? यदि भवति सामर्थ्यम् अस्ति तर्हि अस्माकम् आयुधानि प्रत्यर्प्य अस्माभिः सह युद्धं करोतु । अस्माकम् अपराधः कः ? भवन्तं तु अथितिः इव वयं दृष्टवन्तः'' इति राक्षसं धर्मोपदेशं कृतवान् ।

तत् श्रुत्वा सहदेवः - ''भवान् किमर्थं वृथा एतम् उपदिशति ? यदि शक्यते तर्हि सः मारणीयः । अन्यथा सः अस्मान् मारयेत् । अन्यः मार्गः एव नास्ति'' इति वदन् राक्षसस्य समीपम् आगतवान् ।

तावता भीमः कुतश्चित् तत्र आगतवान् । जटासुरः धर्मराजं, नकुलं, द्रौपदीं च अवतार्य भीमेन सह युद्धार्थम् उद्युक्तः जातः । यावत् जटासुरः शक्तिहीनतां प्राप्नुयात् तावत् भीमः तेन सह बाहुयुद्धं कृत्वा अन्ते तम् उपरि उन्नीय, भ्रामयित्वा अधः पातितवान् । तेन जटासुरः प्राणैः वियुक्तः अभवत् ।

अनन्तरं सर्वे आश्रमम् आगतवन्तः । गतवतः अर्जुनस्य पञ्च वर्षाणि अतीतानि आसन् । सः इतोऽपि न आगतः आसीत् । तस्य प्रतीक्षां कुर्वन्तः पाण्डवाः तस्मिन् प्रान्ते स्थितान् पर्वतान् आश्रमान् च पश्यन्तः कालं यापितवन्तः ।

एकस्मिन् दिने चत्वारः पाण्डवाः अपि एकत्र उपविश्य सम्भाषणं कुर्वन्तः आसन् । तदा एकं प्रकाशमानं पुष्पकविमानम् आकाशमार्गेण पाण्डवानां समीपम् आगत्य पर्वतपार्श्वे स्थितम् । तस्मात् अर्जुनः देवतापुरुषः इव अवतीर्णवान् ।

स्वर्गात् आगतः अर्जुनः अग्रजौ नमस्कृत्य, अनुजौ आलिङ्ग्य तेषां पार्श्वे एव उपविष्टवान् ।

पाण्डवाः इन्द्रस्य रथं आश्चर्येण दृष्टवन्तः । तस्य सारथिं मातलिं गौरवेण सत्कृतवन्तः च । स्वर्गस्थानां कुशलवार्तां पृष्टवन्तः । तेषां प्रश्नानाम् उत्तरं दत्त्वा मातलिः पुनः रथम् आरुह्य स्वर्गं प्रति

प्रस्थितवान् ।

इन्द्रः अर्जुनाय अनेकानि दिव्यास्त्राणि-आभरणानि च दत्तवान् आसीत् । सः तानि द्रौपद्यै दत्त्वा धर्मराजस्य पार्श्वे एव उपविश्य स्वर्गे प्रवृत्तान् अनुभवान् वक्तुम् उद्युक्तः ।

''दितेः पुलोमा, कालका नाम पुत्रीद्वयम् । ते तपसा ब्रह्माणं तोषयित्वा वरं प्राप्तवत्यौ यत् देवदानवतः अस्मत्सन्ततेः मरणं न भवेत्, हिरण्यं नाम महत् नगरं वासस्थानं भवेत् इति । एतस्मात् कारणात् पुलोमा कालका च तस्मिन् नगरे वसन्त्यौ देवतानाम् उपेक्षां कुर्वत्यौ जीवतः स्म । अहं तत्र राक्षसान् जित्वा तत् नगरं प्रविष्टवान् । रथचालनं तत्र महत् कष्टकरम् आसीत् । यतः मार्गे राक्षसानां शवानि राशिरूपेण पतितानि आसन् । नगरे सर्वत्र स्त्रीणां रोदनस्वरः श्रूयते स्म । मम रथस्य शब्दं श्रुत्वा राक्षसस्त्रियः गृहस्य अन्तः निलीय उपविष्टवत्यः आसन् । 'एतस्मिन् नगरे पूर्वं देवताः वसन्ति स्म । इन्द्रः अपि तत्रैव आसीत् । ब्रह्मणः वरेण गर्वं प्राप्य राक्षसाः देवताः बहिः प्रेषयित्वा एतत् नगरं स्वायतीकृतवन्तः' इति मातलिः माम् उक्तवान् । पुलोमाकालकयोः मारणं कथम् इति इन्द्रः ब्रह्माणं यदा पृष्टवान् तदा ब्रह्मा - 'देवदानवजातीयाः एव तत् कार्यं कर्तुं शक्नुवन्ति' इति उक्तवान् । अतः इन्द्रः एतत्कार्यनिमित्तं मां नियोजितवान् । पुलोमाकालके मारयितुं मह्यं दिव्यास्त्राणि अपि दत्तवान् सः । अहं तैः दिव्यास्त्रैः पुलमाकालके सुलभतया जित्वा तयोः नगरं प्रविष्टवान्'' इति ।

अनन्तरदिने सर्वे नित्यकर्माणि समापितवन्तः । धर्मराजः अर्जुनम् आहूय 'भवता आनीतानि द्विव्यास्त्राणि दर्शयतु' इति सूचितवान् ।

अर्जुनः स्नानादिकं समाप्य, देवदत्तनामकं शङ्खम् अन्यानि द्विव्यास्त्राणि च दर्शितवान् ।

तस्मिन् समये नारदः तत्र आगत्य - ''अर्जुन ! एतानि अस्त्राणि उचितकारणेन विना कदापि न उपयोक्तव्यानि । तस्मात् अपायः अस्ति । युद्धे भवान् एतेषाम् उपयोगं यदा करिष्यति तदा अवश्यम् अहं तत्र उपस्थाय भवतः कौशलं द्रक्ष्यामि'' इति उक्त्वा ततः निर्गतवान् । - (अनुवर्तते)



# र स वा र्ताः

## शान्तिविश्वविद्यालयः

शत्रूणां सम्मुखीकरणं कथम् ? कथं तेषां नाशः करणीयः ? युद्धकरणं कथम् ? इत्यादीनां विषये सैनिकेभ्यः शिक्षणं दातुं संस्थाः सन्ति । एवं रीत्या उत्साहियुवक-युवतीनां कृते युद्धरङ्गविषये शिक्षणं दातुम् अपि संस्थाः सन्ति । परन्तु प्रतिवेशिभिः सह कथं स्नेहेन जीवनीयम् ? शान्तियुक्तं जीवनं कथम् ? इति शिक्षणं दातुं स्थितानां विश्वविद्यालयानां विषये एतावता अस्माभिः न श्रुतं स्यात् । तादृशशान्ति-विश्वविद्यालयानां निर्माणार्थम् अस्माकं देशे प्रयत्नः प्रचलन् अस्ति । एतस्य नाम प्रपञ्चशान्तिविश्वविद्यानिलयः (युनैटेड् एर्त पीस् युनिवर्सिटि) इति । महाराष्ट्रसमीपे प्रख्यातज्ञानिनः ज्ञानेश्वरस्य वासस्थाने 'आलन्दि'नामके नगरे एतस्य विश्वविद्यालयस्य प्रतिष्ठापनं क्रियते । नूतनवर्षस्य शुभारम्भदिने एतस्य भूमिपूजा भविष्यति । एतस्य निमित्तं ३०कोटि-अमेरिकन्डालर्व्ययः भवेत् इति व्यवस्थापकैः चिन्त्यते ।

## कवितानां भित्तिः

चैनादेशे होनान्राज्यस्य मध्यभागे स्थिते चाङ्गडेनगरे जलप्रवाहं निरोद्धुं २.५ कि.मी. दूरपर्यन्तं दृढा एका भित्तिः निर्मीयमाणा अस्ति । परन्तु एतया भित्त्या न केवलं जलप्रवाहः निरुध्यते, अपि तु प्रजानाम् अन्यरीत्या अपि साहाय्यं क्रियते । एतस्यां भित्त्यां १००० कविताः लेखनीयाः इति तद्देशीयाः कवयः निर्णीतवन्तः । एतासु कवितासु प्राचीन-आधुनिक-कवीनां कविताः सन्ति । १९४९ तः १९७६ पर्यन्तं चैनां पालितवान् तस्य देशस्य धुरीणः मावो से टुङ्ग चाङ्गडेसमीपे एव जन्म प्राप्तवान् आसीत् । चैनादेशस्य आधुनिककविषु सः प्रख्यातः आसीत् इति पुनः वक्तव्यं नास्ति खलु ?

## धूमशक्तिः

नगरेषु अवकराणां मध्ये अग्निः ज्वाल्यते चेत् धूमः निर्गच्छति । सा अपि एका शक्तिः चेदपि तस्याः उपयोगः न क्रियते । तादृशस्य धूमस्य अपि उपयोगार्थं तायवान्प्रदेशे कश्चन मार्गः अन्विष्टः अस्ति । पैटोन्नगरस्य परिसरे अवकरान् यत्र ज्वालयन्ति तस्य उपरि भोजनालयस्य निर्माणं कृतम् अस्ति । अत्र १५० पादपरिमितः अट्टद्वयात्मकः धूमनालः अस्ति । अत्र निर्मीयमाणः भोजनालयः भूमितः १२० पादोन्नते स्थले भविष्यति । धूमनालं परितः भ्रममाणे भोजनालये १०० जनाः उपवेष्टुम् अर्हन्ति । उपरितने अट्टे १२ दूरदर्शकानि योजितानि सन्ति । एतादृशः भोजनलयः प्रपञ्चे एव अद्वितीयः अस्ति ।

## गृहरूपेण परिवर्त्यमानाः गुहाः

चैनादेशे सामान्यतः ४० लक्षजनाः गुहासु वसन्ति । एतेषु दिनेषु ते नगरजीवने आसक्ताः सन्तः तत्रैव गत्वा वसन्तः सन्ति । एतादृशैः रिक्तीकृतासु गुहासु विविधव्यवस्थां कल्पयित्वा सुन्दरगृहाणि करणीयानि इति सर्वकारस्य योजना अस्ति। पक्षिनीडसदृशेषु गृहेषु वासं कृत्वा जुगुप्सिताः जनाः गुहासदृशगृहेभ्यः आकृष्टाः भवेयुः इति सर्वकारस्य चिन्तनम् । वायव्य - चैनाभागे लोस्पीठभूम्यां गृहाणाम् आधुनिकी-करणार्थं गृहनिर्माणकर्मकराः कार्यं कुर्वन्तः सन्ति । गान्स्-हेनार्-पान्सी-प्रदेशेषु स्थिताः गुहाः एतावता एव गृहरूपेण परिवृत्ताः सन्ति । विद्युतः सञ्चयः प्रकृतिसंरक्षणं च भवति इति कारणतः अन्ताराष्ट्रियवास्तुशिल्पिनः एतेभ्यः गुहा-गृहेभ्यः आकृष्टाः सन्ति ।

# कणेरवृक्षः

एतस्मिन् विभागे येषां वृक्षाणां विषये विवरणं प्रतिमासं दीयते ते वृक्षाः सर्वे भारते एव प्रवृद्धाः इति न । बहवः वृक्षाः कुत्रचित् वर्धिताः सन्तः भरतखण्डे सर्वत्र व्यापृताः सन्ति । परन्तु कणेरवृक्षाः तु भारते एव उत्पन्नाः । वृक्षशास्त्रे एतं वृक्षं - 'दिल्लेनिया इण्डिका'नाम्ना आह्वयन्ति । 'इण्डिका'पदस्य अर्थः भारत-सम्बद्धम् इति ।

एतं वृक्षं हिन्दीभांषया 'चल्ता' इति, बङ्गालीभाषया मलयाळीभाषया च 'चलित' इति, ओरियाभाषया 'चलोता' इति, गुजरातीभाषया 'कारम्बाल्' इति, मराठीभाषया 'कर्माल्' इति, तेलगुभाषया 'पेद्दकाळिङ्ग' इति च वदन्ति ।

अस्सां - पश्चिमबङ्गाल्-बिहार - राज्येषु एते वृक्षाः प्राधान्येन दृश्यन्ते । अन्यराज्येषु अपि एते विरलतया दृश्यन्ते एव । ऋजुरूपेण वर्धमानानाम् एतेषां वृक्षाणां शाखाः गोलाकारेण किरीटम् इव दृश्यन्ते । एतज्जातीयानां वृक्षाणां त्वक् मृदुः वलयिता च भवति । एतेषां वृक्षाणाम् औन्नत्यं १०-१२ मी. भवति । वृक्षे शाखाः सर्वत्र व्यापृताः भवन्ति ।

एतस्य वृक्षस्य पर्णानि सर्वदा हरितवर्णीयानि एव भवन्ति । विशालानि एतानि शाखानाम् अन्ते भवन्ति । पर्णानां पार्श्वभागः रूक्षः भवति ।

सुगन्धयुक्तानि एतद्वृक्षस्य पुष्पाणि विशालानि श्वेतवर्णीयानि च भवन्ति । तानि शाखानाम् अन्ते पृथक् पृथक् पुष्पितानि भवन्ति । जून्-जुलैमासयोः पुष्पाणि विकसन्ति ।

एतस्य फलानि बृहन्ति भवन्ति । सामान्यतः ८-१२ से.मी. विशालानि भवन्ति तानि । फलानाम् उपरितना त्वक् दृढा भवति । अन्तः बीजानि भवन्ति ।

अस्माकं देशे पश्चिमभागे कदलीपर्णाकारकैः पर्णैः युक्ताः एतज्जातीयाः वृक्षाः दृष्टिगोचराः भवन्ति ।



अस्मद्देशीयाः ऋषयः -

# बलाकिः

अस्माकं प्राचीनऋषयः महाज्ञानिनः आसन् । तथापि सर्वदा जिज्ञासवः एव भवन्ति स्म ते । ते स्वहृदयेषु ज्ञानज्योतिं ज्वालयितुं सदा प्रयत्नं कुर्वन्ति स्म । ते विनयशीलाः अपि भवन्ति स्म ।

एतेभ्यः स्वभावेभ्यः भिन्नः बलाकिनामकः कश्चित् मुनिकुमारः पूर्वम् आसीत् । अध्ययनस्य समाप्तेः अनुक्षणम् एव 'अहं सर्वं जानामि' इति अहङ्कारं प्राप्तवान् आसीत् सः । ''यः कोऽपि ज्ञानी भवतु, तम् अपि नूतनं किञ्चित् उपदेष्टुं शक्नोमि अहम्'' इति सः गर्वेण वदति स्म । अतः एव सर्वे तं 'दृप्तः बलाकिः' इति वदन्ति स्म ।

कदाचित् 'काशीराजः ज्ञानपिपासुः' इति कस्यचित् वचनं बलाकिः श्रुतवान् । अतः सः काशीनगरं गत्वा काशीराजेन मिलित्वा उक्तवान् यत् अहं भवन्तं ब्रह्मज्ञानं बोधयामि इति । एतस्मात् काशीराजः सन्तुष्टः सन् 'तथैव भवतु' इति उक्तवान् । परन्तु मन्त्रं श्लोकम् अर्थं वा वक्तुं यावत् बलाकिः उद्युक्तः भवति स्म ततः पूर्वम् एव काशीराजः स्वयं सर्वं वदति स्म । एतस्मात् 'अहं यावत् जानामि ततोऽपि अधिकं जानाति काशीराजः' इति बलाकिः ज्ञातवान् । स्वगर्वम् अज्ञानं च ज्ञात्वा सः लज्जितः अभवत् । अतः सः काशीराजं क्षमां सम्प्रार्थ्य तस्य शिष्यः अभवत् ।

एकदा महाराजः निद्रां कुर्वन्तं कञ्चित् जनं बलाकये दर्शयन् - ''सः निद्रां कुर्वन् अस्ति । इदानीं तस्य प्रज्ञा कुत्र भवति ?'' इति पृष्टवान् । परन्तु बलाकिः उत्तरं दातुम् अशक्तः सन् मौनं स्थितवान् ।

तदा महाराजः एवं विवृतवान् - ''यदा मनुष्यः गाढनिद्रायां भवति तदा तस्य प्रज्ञा नास्ति चेदपि सः अनिर्वचनीयं सन्तोषम् अनुभवति । यतः तस्यां स्थितौ तस्य आत्मा भगवतः समीपे सञ्चरन् भवति । यदि मनुष्यः जागृदवस्थायाम् अपि तादृशम् एव सन्तोषम् अनुभवति तर्हि सः एव आत्मज्ञानी, अत्युत्तमः संयमी च भविष्यति'' इति ।



# भवन्तः जानन्ति वा ?

१. 'कथासरित्सागरं' कः लिखितवान् ?
२. डैनामेट्मध्ये प्रधानं रासायनिकवस्तु किं भवति ?
३. होमर्-मिल्टन्-हेलन् किलर्-वेद्मेह्ता-एतेषां मध्ये स्थितं सादृश्यं किम् ?
४. भारते राज्याङ्गशासने प्राथमिकाधिकारात् पैतृकसम्पत्तेः अधिकारस्य पृथक्करणार्थं कदा विधिपरिष्कारः कृतः ?
५. 'भारतीदासः' इति काव्यनाम्ना ग्रन्थान् कः राजकीयपुरुषः रचितवान् ?
६. ऐदम्प्राथम्येन म्याग्सेसेप्रशस्तिं प्राप्तवान् भारतीयः कः ?
७. इदम्प्रथमतया नोबेल्प्रशस्तिः कया संस्थया प्राप्ता ?
८. प्रतिवर्षं डिसम्बर् १० दिनाङ्के नोबेल्प्रशस्तिः दीयते । तस्य दिनाङ्कस्य वैशिष्ट्यं किम् ?
९. 'लिबर्टि'विग्रहस्य निर्माणं कः कृतवान् ?
१०. विश्वसंस्थायाः व्यवहारभाषाः काः ?
११. विश्वसंस्थायाः पत्रं (चार्टर्) कदा व्यवहारे आगतम् ?
१२. विश्वसंस्थायाः भद्रतामण्डल्यां शाश्वतसदस्यत्वम् आवश्यकम् इति भारतदेशेन कदा अभ्यर्थना कृता ?
१३. 'रेविन्यूस्टाम्प्' इत्येतस्य आत्मचरितस्य कर्ता कः ?
१४. भारते आङ्गलभाषा कस्मिन् राज्ये शासकीयव्यवहारभाषारूपेण अस्ति ?
१५. अस्माकं देशस्य प्रथमराष्ट्रियमार्गः कुत्र अस्ति ?
१६. आगामिविश्वकप्क्रिकेट् कस्मिन् देशे प्रचलिष्यति ?

## उत्तराणि

१. सोमदेवः ।
२. नैट्रोग्लिसरिन् ।
३. अन्धाः चेदपि एते प्रसिद्धग्रन्थान् रचितवन्तः ।
४. १९७८ तमे वर्षे । ४४ तमः परिष्कारः ।
५. अटल् बिहारि वाजपेयी ।
६. आचार्य विनोबा भावे ।
७. बेल्जियं देशे स्थिता अन्ताराष्ट्रिया न्यायिकसंस्था ।
८. तत् प्रपञ्चमानवाधिकारदिनम् ।
९. फ्रेडरिक् अगस्टे बार्तो ।
१०. अरबिक्-चैनीष्-आङ्ग्ल-फ्रेञ्च्-रष्यन–स्यानीष्-भाषाः ।
११. १९४५ तमे अक्टोबर् २४ ।
१२. १९९४ अक्टोबर् २ ।
१३. अमृताप्रीतम् ।
१४. नागाल्याण्ड्राज्ये ।
१५. देहलीतः चण्डीघडपर्यन्तम् ।
१६. इङ्गलेण्ड्देशे ।

# अधिकारबलम्

जयदेवः नाम शिक्षकः कदाचित् नगरं गतवान् आसीत् । तत्र सः रात्रौ वासार्थं काञ्चित् धर्मशालां गतवान् । धर्मशालायां जनसम्मर्दः आसीत् । केचन द्यूतं क्रीडन्तः, केचन सुरां पिबन्तः च आसन् । एषा धर्मशाला उत सुराशाला इति जयदेवस्य सन्देहः अभवत् । तावति काले - ''आगतः । आगतः । वीराधिवीरः !'' इति सर्वे उच्चस्वरेण उक्तवन्तः ।

तत् श्रुत्वा द्यूतं क्रीडन्तः सर्वेऽपि धावितवन्तः । तदा एव अन्यस्मिन् पार्श्वे पिहितं द्वारं कश्चित् वेगेन ताडितवान् । तेन द्वारं सशब्दं भग्नं जातम् ।

जयदेवः दिग्भ्रान्तः सन् यावत् तत्र दृष्टवान् तावता अजानुबाहुः भयङ्करः कश्चित् जनः - ''पिपासा ! पिपासा !'' इति उच्चस्वरेण वदन् तत्र आगतवान् । अनन्तरम् उत्पीठिकायां स्थितां सुरां दृष्ट्वा - ''अहो ! पानीयम् अत्र अस्ति किल'' इति वदन् जयदेवम् उग्रदृष्ट्या दृष्टवान् ।

'एषः पिशाचः कुतः आगतः ? एषः माम् एव किमर्थम् एवम् उग्रदृष्ट्या पश्यति ?' इति चिन्तयन्, भीत्या कम्पमानः जयदेवः हस्तेन कलशं स्वीकृत्य तस्मै जनाय दत्तवान् ।

सः जनः वेगेन तत् पानीयं पीत्वा यावत् सर्वत्र द्रष्टुम् उद्युक्तः तावता जयदेवः 'एतस्य स्नेहः सम्पादनीयः' इति निश्चित्य - ''स्वामिन् ! इतोऽपि पानीयम् आवश्यकं वा ? खादितुं किमपि आवश्यकं वा ?'' इति पृष्टवान् ।

''खादनीयं पातव्यं च इति इच्छा तु प्रबला एव अस्ति । किन्तु किं करवाणि, वीराधिवीरः इतः एव आगच्छति इति श्रूयते ।अहो, तत्र पश्यतु । सः उपस्थितः एव'' इति वदन् सः जनः ततः वेगेन अन्यत्र गतवान् ।

तावता वामनः कश्चित् हस्तेन आयुधानि गृहीत्वा रक्षकैः सह तत्र आगत्य क्षीणस्वरेण - ''भोः ! मम आगमनं ज्ञात्वा द्यूतं क्रीडन्तः, सुरां पिबन्तः च जनाः धावन्तः सन्ति । तान् अनुसृत्य गृह्णन्तु भवन्तः । तावता अहम् एतस्याः धर्मशालायाः स्वामिनं गृह्णामि'' इति भटान् उद्दिश्य उक्तवान् ।

''सामान्यजनाः अधिकारबलात् भीताः भवन्ति, न तु देहबलात्'' इति ज्ञात्वा जयदेवः हसितवान् ।






# मौक्तिकहारकथा

रङ्गः कस्यचित् कार्यस्य निमित्तं नगरं प्रति प्रस्थितवान् । मार्गे खादनार्थं तस्य पत्नी रोटिकात्रयं दत्तवती आसीत् । अरण्यमार्गे गमनसमये अनिरीक्षिततया तस्य पुरतः कश्चित् युवकः आगतवान् ।

सः युवकः धनिकपुत्रः इव दृश्यते स्म । उत्तमं वस्त्रं धृतवान् आसीत् सः । परन्तु तत् वस्त्रं मलिनम् आसीत् । सः रङ्गं पृष्टवान् – ''प्रथमं खादितुं किमपि अस्ति चेत् ददातु'' इति ।

''न ददामि'' इति उक्तवान् रङ्गः ।

तदा सः युवकः बलात् रङ्गस्य हस्ते स्थिताः सर्वाः रोटिकाः स्वीकृत्य वेगेन खादितवान् ।

'मम खादनार्थं किमपि न अवशिष्टं खलु !' इति खेदम् अनुभूतवान् रङ्गः ।

सः युवकः तत् किमपि अनवलोक्य – ''समीपे स्थितं भद्रगिरिनामकं ग्रामं भवान् जानाति वा ?'' इति रङ्गं पृष्टवान् ।

रङ्गः – ''आम् । भद्रगिरिं जानामि अहम्'' इति उक्तवान् ।

''नगरतः भद्रगिरिगमनसमये अरण्ये मार्गभ्रष्टः जातः अहम् । दिनद्वयम् आहारः न आसीत् । रोटिकां खादित्वा इदानीं शक्तिं प्राप्तवान् अस्मि । भवान् मां भद्रगिरिं प्रापयतु । मम पिता भद्रगिरेः भूस्वामी अस्ति । अतः सः भवते उपायनं दास्यति'' इति युवकः रङ्गम् उक्तवान् ।

उपायनस्य इच्छया रङ्गः तं युवकं भद्रगिरिं प्रापितवान् । तदा भूस्वामी सन्तोषेण रङ्गाय एकम् अमूल्यं मौक्तिकहारं दत्तवान् ।

तादृशं महत् उपायनं लभ्येत इति रङ्गः न ऊहितवान् आसीत् । सः मौक्तिकहारः अमूल्यः आसीत् । अतः रङ्गस्य सन्तोषः वर्णनातीतः अभवत् ।



मया सह सोमस्य गृहम् आगच्छति वा ?'' इति रङ्गं पृष्टवान् ।

सोमस्य पुत्री अत्यन्तं बुद्धिमती । कष्टेन कार्यं करोति स्म । सुन्दरी अपि आसीत् । परन्तु सा वलिरा । अतः तस्याः विवाहार्थं कष्टम् आसीत् । ग्रामे सर्वेऽपि सोमम् इच्छन्ति स्म । एतं विषयं रङ्गः अपि जानाति स्म । तथापि 'मम सौभाग्यस्य विषये एषः अवधानम् अदत्त्वा अन्यम् एव विषयं वदन् अस्ति' इति चिन्तयन् रङ्गः - ''मम अन्यत् कार्यम् अस्ति'' इति उपेक्षामिश्रितस्वरेण उक्त्वा अग्रे प्रस्थितः ।

तावति काले शालाशिक्षकः पूर्णानन्दः पुरतः आगतवान् । रङ्गः हारं शिक्षकाय दर्शयन् - ''एषः सामान्यः हारः न । एषः मौक्तिकहारः भद्रगिरिभूस्वामिना उपायन-रूपेण मह्यं दत्तः'' इति उक्तवान् ।

''तथा वा ? सम्यक् अस्ति हारः'' इति औपचारिकरूपेण उक्त्वा - ''अस्माकं ग्रामस्य पण्डितं रामशास्त्रिणं राजधान्यां महाराजः सम्मानितवान् । एषः ग्रामस्य सन्तोषस्य विषयः । रामशास्त्री ह्यः राजधानीतः प्रत्यागतवान् अस्ति । तं द्रष्टुं गच्छन् अस्मि अहम् । भवान् अपि आगच्छति वा ?'' इति रङ्गं पृष्टवान् शिक्षकः ।

'मया किमपि उच्यते । एषः तु अन्यत् एव वदन् अस्ति' इति मनसि एव चिन्तयन् रङ्गः - ''मम अन्यत् कार्यम् अस्ति । अतः न आगच्छामि'' इति पूर्णानन्दम् उक्त्वा अग्रे गतवान् ।

किञ्चित् अग्रे गमनानन्तरं रङ्गः नागराजं

रङ्गः हारं कण्ठे धृतवान् । सः नगरं न गतवान् एव । साक्षात् ग्रामम् आगतवान् । परिचितानां पुरतः स्वस्य भावस्य कथने महती त्वरा आसीत् तस्य ।

मार्गे प्रथमं गोविन्दः तेन दृष्टः । त्वरया कुत्रापि गच्छन्तं तम् अवरुद्ध्य - ''मम कण्ठे मौक्तिकहारं दृष्टवान् खलु भवान् ? मया यः उपकारः कृतः तस्य प्रतिफलरूपेण एतं हारं भद्रगिरिभूस्वामी मह्यम् उपायनरूपेण दत्तवान्'' इति उक्तवान् रङ्गः ।

गोविन्दः तस्मिन् विषये अवधानम् अदत्त्वा - ''सोमस्य पुत्र्याः विवाहः निश्चितः अस्ति इति वार्ता । समग्रग्रामे एव एषा वार्ता सन्तोषकरी अस्ति । सोमस्य साहाय्यं कर्तुं प्रस्थितः अहम् । भवान् अपि

दृष्टवान् । त्वरया गच्छन्तं रङ्गम् अवरुद्ध्य नागराजः - "भवतः कण्ठे किमपि प्रकाशते किल ? हारः वा ? आपणे क्रीतवान् वा भवान् ? हारे मौक्तिकम् अस्ति इव भासते । तत् कृत्रिमम् उत वास्तविकम् ? मूल्यं कियत् दत्तम् ?" इति प्रश्नान् पृष्टवान् ।

स्वस्य वचनात् पूर्वम् एव हारस्य विषयं नागराजः पृष्टवान् इति कारणतः सन्तुष्टः रङ्गः - "एषः नूतनः मौक्तिकहारः । अमूल्यम् एतं मौक्तिकहारं भद्रगिरि-भूस्वामी उपायनरूपेण मम कण्ठे स्थापितवान्" इति उच्चैः उक्तवान् ।

नागराजः रङ्गम् अन्यत् किमपि पृष्टवान् । रङ्गः उत्तररूपेण किञ्चित् उक्तवान् । किन्तु नागराजः तत् किञ्चित् अपि सम्यक् अश्रुत्वा - "भवान् जानाति खलु - वेङ्कटेशस्य क्षेत्रम् उत्तमं नास्ति इति ? वर्षद्वयतः अनावृष्टिकारणतः तत्र फलोदयः अपि न जातः आसीत् । ह्यः तस्य क्षेत्रस्य कूपे जलम् आगतम् इति श्रूयते । वेङ्कटेशस्य कष्टं परिहृतम् इति कारणतः ग्रामजनाः सर्वे सन्तुष्टाः सन्ति । अहं वेङ्कटेशम् अभिनन्दनवचनानि वक्तुं गच्छन् अस्मि । भवान् अपि आगच्छति वा ?" इति पृष्टवान् ।

रङ्गः नितरां कुपितः । 'यः कोऽपि मम अदृष्टं न श्लाघते किल । भूस्वामी किमर्थं हारं दत्तवान् इति कोऽपि न पृच्छति किल' इति चिन्तयन् सः अग्रे गतवान् । अग्रे अन्ये मिलिताः चेदपि तैः सह सम्भाषणम् अकृत्वा गृहं प्राप्तवान् रङ्गः ।



तस्य पत्नी मौक्तिकहारं दृष्ट्वा प्रवृत्तं सर्वं पृष्ट्वा - "अहो, कीदृशं सौभाग्यम् अस्माकम् ! बहुभ्यः वर्षेभ्यः मौक्तिकहारः प्राप्तव्यः इति स्वप्नं पश्यामि स्म । अद्य तत् सिद्धम्" इति सन्तोषेण उक्तवती ।

"एषः हारः पुरुषैः धरणीयः । भूस्वामी स्वकण्ठतः निष्कास्य मह्यं दत्तवान्" इति पत्नीम् उक्तवान् रङ्गः ।

तदा तस्य पत्नी उच्चैः हसित्वा - "हारधरणे स्त्री-पुरुषभेदः नास्ति । धनिकाः हारं धरन्ति । निर्धनपुरुषाः न धरन्ति । परन्तु सर्वविधाः अपि स्त्रियः तु धरन्ति एव" इति उक्तवती ।

"तथापि मम श्रेष्ठत्वं दृष्ट्वा एव भूस्वामिना दत्तः हारः एषः । अतः एतम् अहम् एव धरामि" इति अनुरोधपूर्वकम्

उक्तवान् रङ्गः ।

''तत् कीदृशं श्रेष्ठत्वं भवतः ? याचकाय रोटिकां वा दत्तवान् वा भवान् ? सः युवकः बलात् यदा रोटिकां खादितवान् तदा भवान् खेदं प्राप्तवान् । भूस्वामिनः पुत्रः इति ज्ञात्वा किमपि उपायनं लभ्यते इत्येव भवान् तं गृहं प्रापितवान् । एतत् सर्वम् अदृष्टम् एव, न तु भवतः किमपि श्रेष्ठत्वम् । यदि अहं रोटिकां न अदास्यं तर्हि तस्य युवकस्य मेलनम् एव न अभविष्यत् । एतत् अदृष्टं सर्वं मम द्वारा एव जातम् अस्ति । एषः विषयः मम जातके लिखितः अस्ति'' इति उक्तवती रङ्गस्य पत्नी ।

''न केवलं ग्रामजनानाम्, अपि तु पत्न्याः भवत्याः अपि मम विषये असूया'' इत जुगुप्सया उक्तवान् रङ्गः ।

''ग्रामजनानां भवति असूया किमर्थम् ? भवति तादृशी का श्रेष्ठता अस्ति, येन ते असूयां कुर्युः ?'' इति तस्य पत्नी पृष्टवती ।

तदा रङ्गः ग्रामे प्रवृत्तं स्वानुभवं पत्नीम् उक्त्वा - ''मया दृष्टेषु एकः अपि मां न श्लाघितवान् । एषः हारः कथं प्राप्तः इति कोऽपि न पृष्टवान् । इदानीं भवती एव वदतु, अत्र असूयां विना अन्यत् किम् अस्ति ?'' इति उक्तवान् ।

''अत्र असूया कथं भवति ? ग्रामे प्रवृत्तेषु सन्तोषविषयेषु भवान् उत्साहं प्रकटितवान् वा ? उत्तमवचनम् उक्तवान् वा ? तत् किमपि भवान् अकृत्वा स्वस्य विषये तेभ्यः सन्तोषम् अपेक्षते किल ? सन्तोषे आदनप्रदानं भवति'' इति उक्तवती तस्य पत्नी ।

तस्याः वचनं श्रुत्वा दिङ्मूढः रङ्गः स्वविषये चिन्तयितुं यावत् उद्युक्तः तावता



तस्य पत्नी - ''भवता ये मिलिताः ते सर्वे अन्येषां लाभविषये उक्तवन्तः । भवान् तु स्वलाभविषये एव चिन्तितवान् । एतावत्पर्यन्तं भवता सह गार्हस्थ्यजीवनं कृतवत्यै मह्यम् आभरणं किमपि दत्तवान् वा भवान् ? उपायनीकृतम् एतं हारम् अपि भवान् एव धर्तुम् उद्युक्तः अस्ति । प्रीत्या पत्न्यै हारः दातव्यः इति भवान् न चिन्तयति एव । भवान् अत्यन्तं स्वार्थी अस्ति'' इति दुःखेन उक्तवती ।

अनुक्षणम् एव रङ्गः हारं पत्न्यै दत्त्वा - ''एतं हारं स्वीकृत्य अहं किं करोमि ? एषः भवत्यै दातव्यः इत्येव मम आशयः आसीत् । तथापि विनोदार्थं किञ्चित् नाटकं कृतवान् अहम् । तावति काले एव भवती विविधवचनैः मां निन्दितवती'' इति उक्तवान् ।

तस्य पत्नी हारं कण्ठे धृत्वा अनुक्षणम् एव तं नमस्कृत्य - ''अहं लघुचिन्तनं कृतवती । अतः तथा उक्तवती । भवतः मनः विशालम् अस्ति । अतः एव भद्रगिरिभूस्वामी भवते उपायनं दत्तवान् । भवन्तं निन्दितवत्यै मह्यम् अपि भवान् हारं दत्तवान् । तादृशं विशालं हृदयम् अस्ति भवतः । विशालमनस्कः भवान् मम पतिः अस्ति इति तु मम सौभाग्यम् एव'' इति उक्तवती ।

पत्न्याः मुखात् एतानि वचनानि श्रुत्वा रङ्गः अत्यन्तं सन्तुष्टः । अनन्तरं सः गृहात् बहिः आगत्य प्रथमं सोमस्य गृहं गतवान् । तत्र - ''भवतः पुत्र्याः वरः लब्धः इति श्रुतवतः मम महान् सन्तोषः जातः । विवाहदिने यथाशक्ति साहाय्यं अहं करोमि'' इति सोमम् उक्तवान् । ततः रामशास्त्रिणः गृहं गत्वा सम्माननस्य विषयं सर्वं ज्ञातवान् । पुनः वेङ्कटेशस्य क्षेत्रं गत्वा कूपं दृष्ट्वा सन्तोषम् अनुभूतवान् । कूपात् किञ्चित् जलम् उद्धृत्य पीतवान् अपि । एवं सर्वाणि गृहाणि गत्वा रङ्गः यदा गृहम् आगतवान् तदा तस्य सन्तोषः अभवत् । रात्रौ सः सुखेन निद्रां कृतवान् ।

अनन्तरदिने तस्य उत्थानात् पूर्वम् एव तस्य गृहस्य पुरतः जनाः उपस्थिताः आसन् । भद्रगिरिभूस्वामिनः मौक्तिक-हारस्य विषयः ज्ञातव्यः इति, सः हारः द्रष्टव्यः इति च सर्वे तत्र मिलिताः आसन् ।





# चन्द्रहारः

कमलायाः पिता निर्धनः आसीत् । सः एव कमलायाः मातुः मरणानन्तरं तां पोषितवान् । भगवान् कमलायै अपूर्वं सौन्दर्यं दत्तवान् आसीत् । कमला सदा दर्पणे स्वसौन्दर्यं पश्यन्ती गर्वम् अनुभवति स्म । तस्याः सौन्दर्यं दृष्ट्वा सर्वेऽपि तां बहुधा श्लाघन्ते स्म । एतस्मात् कमला "अहम् अत्यन्तं सुन्दरी । अतः मम सौन्दर्यं दृष्ट्वा कश्चित् भूस्वामिपुत्रः स्वयं मम गृहम् आगत्य मां परिणेष्यति । अहं धनिका भविष्यामि" इति स्वप्नं पश्यति स्म ।

कमलां परिणेतुं बहुजनाः आगताः । तादृशेषु मध्यमवर्गीयाः एव अधिकाः आसन् । ते कमलाम् इष्टवन्तः, तेनैव सह वरदक्षिणाम् अपि इष्टवन्तः । तैः यावती वरदक्षिणा इष्टा तावतीं दातुं कमलायाः पितुः सामर्थ्यं तु न आसीत् । अतः कमलायाः विवाहः न जातः ।

अथ कदाचित् नगरे कार्यं कुर्वन् शिवस्वामी कमलाम् इष्टवान् । वरदक्षिणां विना निराडम्बरविवाहं सः अङ्गीकृत-वान् । सरलक्रमेण कमलायाः विवाहः जातः अपि । सर्वे बान्धवाः कमलायाः अदृष्टं श्लाघितवन्तः । परन्तु स्वस्य स्वप्नस्य अनुगुणं किमपि न जातमिति कमला तु असन्तुष्टा एव आसीत् ।

विवाहानन्तरं कमला शिवस्वामिना सह नगरं गतवती । तत्र वासार्थं शिवस्वामिनः स्वगृहम् आसीत् । भोजनादिविषये कष्टं न आसीत् । कमलां सः बहु इच्छति स्म । तथापि काचित् न्यूनता सर्वदा कमलां बाधते स्म । मम समीपे कौशेयशाटिकाः, आभरणानि च न सन्ति इति सा सर्वदा चिन्तयति स्म ।

एकदा शिवस्वामिनः बन्धुः कश्चन विवाहार्थम् आह्वातुम् आगतवान् ।

कमलया सह विवाहार्थं गन्तव्यम् इति शिवस्वामी निश्चितवान् । परन्तु कमला असन्तोषेण निरुत्साहिनी आसीत् ।

''धर्तुम् उत्तमा शाटिका नास्ति, आभरणम् अपि नास्ति । मां दृष्ट्वा मम सख्यः हसेयुः । अतः अहं न आगच्छामि'' इति सा पतिम् उक्तवती ।

शिवस्वामी किमपि प्रतिवचनम् अनुक्त्वा अनुक्षणम् एव ततः गतवान् । स्वामिनः सकाशात् किञ्चित् ऋणं स्वीकृतवान् च । ततः सः एकां सुन्दरीं कौशेयशाटिकां क्रीतवान् । मार्गे किञ्चित् पुष्पम् अपि स्वीकृत्य गृहं गतवान् च ।

गृहगमनानन्तरं शिवस्वामी नूतनशाटिकां पुष्पं च पत्न्यै दत्त्वा - ''कमले ! भवती सहजसुन्दरी अस्ति । तथापि शुभकार्यं प्रति गमनसमये अलङ्कारं विना गमनं न शोभते । प्रतिवेशिन्याः कान्तायाः गृहे तु प्रभूतानि आभरणानि सन्ति । 'दिनद्वयाभ्यन्तरे एव प्रत्यार्पयिष्यामः', इति उक्त्वा ततः योग्यम् एकम् आभरणम् आनयतु भवती'' इति उक्तवान् ।

कमला अनिच्छया एव कान्ताम् आभरणं याचितवती । कान्ता कपाटिकातः एकां पेटिकाम् आनीय कमलायाः पुरतः स्थापितवती । कमला पेटिकातः एकं चन्द्रहारं स्वीकृत्य - 'दिनद्वयानन्तरं दास्यामि' इति उक्त्वा ततः प्रत्यागतवती ।

कमला शिवस्वामी च वृषभशकटेन घण्टात्रयस्य प्रयाणं कृत्वा विवाहगृहं प्राप्तवन्तौ । मुहूर्तः तु अनन्तरदिने प्रातः दशवादने आसीत् । अनन्तरदिने प्रातः-काले स्नानं समाप्य कमला नूतनां शाटिकां धृतवती । कण्ठे चन्द्रहारं, शिरसि मल्लिकापुष्पं चापि धृतवती । सा तु सहजतया एव सुन्दरी आसीत् । इदानीम्



कान्तां किं वदेम ? विवाहे हारः नष्टः इति वचने सा विश्वासम् अकृत्वा अस्मान् एव वञ्चकाः इति वदेत् । अतः तादृशम् एव चन्द्रहारं क्रीत्वा तस्यै दद्मः'' इति उक्तवान् ।

अनन्तरं शिवस्वामी गृहतः प्रस्थाय मध्याह्ने गृहं प्रत्यागतवान् । 'स्वामितः पुनरपि किञ्चित् ऋणं प्राप्तवान्, गृहम् आधिरूपेण निक्षिप्य अपि धनम् आनीतवान्' इति सः कमलाम् उक्तवान् । अनन्तरम् उभौ अपि बहून् आपणान् गत्वा अन्ते एकस्मिन् आपणे अपेक्षितं चन्द्रहारं क्रीतवन्तौ ।

तस्मिन् दिने सायङ्काले एव चन्द्रहारं कान्तायै दत्तवती कमला ।

दिनद्वयानन्तरं कमला कर्मकरीम् उद्योगात् च्यावयित्वा गृहकार्यं स्वयम् एव कर्तुम् उद्युक्ता अभवत् । नारिकेल-पत्रशलाकाभिः सम्मार्जनीः कृत्वा तासां विक्रयणं कृतवती । कमलायाः एतस्मिन् कार्ये शिवस्वामी अपि सहकारं दत्तवान् ।

एवम् एव पञ्च वर्षाणि अतीतानि । अधिककार्येण कमलायाः कोमलत्वं न्यूनं जातम् । पूर्वं सा घण्टां यावत् दर्पणेन स्वसौन्दर्यं पश्यन्ती समययापनं करोति स्म । तादृशी इदानीं स्वसौन्दर्यविषये चिन्तयितुम् अपि समयं न प्राप्नोति स्म । इदानीं जीवने तस्याः असन्तृप्तिः न आसीत् ।

कदाचित् कमला आत्मना सङ्गृहीतं धनं पेटिकातः स्वीकृत्य गणितवती । गणनायाः अनन्तरं सा अत्यन्तम् आनन्दम् अनुभूतवती । यतः नष्टस्य चन्द्रहारस्य



एतेन अलङ्कारेण सा वज्रम् इव प्रकाशते स्म । विवाहार्थम् आगतानां सर्वेषाम् अपि दृष्टिः तस्याम् एव आसीत् । एतत् सर्वम् अवलोक्य कमला अत्यन्तं सन्तुष्टा ।

विवाहस्य अनन्तरदिने एव पति-पत्न्यौ नगरम् आगतवन्तौ । कान्तायाः आभरणं प्रत्यर्पणीयम् इति कमला पेटिकाम् उद्घाटितवती । हा हन्त ! तस्यां पेटिकायां चन्द्रहारः न आसीत् !! एतस्मात् कमला दिग्भ्रान्ता जाता । पेटिका तु यथापूर्वं कीलिता एव आसीत् । अतः आभरणं कथम् अदृश्यतां गतम् इति कमलया न ज्ञातम् एव ।

विषयं ज्ञात्वा शिवस्वामी कमलायाः सान्त्वनं कुर्वन् - ''विवाहम् आगतेषु केन चौर्यं कृतम् इति ज्ञातुं न शक्यते । इदानीं

निमित्तं कृतम् ऋणं प्रत्यर्पयितुं यावत् धनम् आवश्यकं तावत् सञ्चितम् आसीत् एतावता ।

यदा शिवस्वामी गृहम् आगतवान् तदा कमला एतां सन्तोषकरीं वार्तां शिवस्वामिनम् उक्तवती । तत् श्रुत्वा शिवस्वामी - ''पूर्वं सौन्दर्यमदः महान् आसीत् । अतः आभरण-कौशेय-शाटिकादीनां महान् व्यामोहः आसीत् भवत्याः । किन्तु यदा ऋणभारः आपतितः तदा भवती दर्पणं द्रष्टुम् अपि समयं न प्राप्नोति स्म । अतः सहजतया सौन्दर्यमदः अपगतः । परिश्रमेण कार्यकरणात् भवत्याः सौन्दर्यस्य तु काऽपि हानिः न जाता । यदि एतत् वचनम् अहं पूर्वं वदेयं तर्हि भवती कुपिता अभविष्यत् । इदानीं तु भवत्यां परिपक्वता दृश्यते । अतः एतत्सर्वं वदन् अस्मि । एतत्सन्दर्भे अन्यत् अपि रहस्यं स्फोटयितुम् इच्छामि'' इति उक्तवान् ।

''किं तत् रहस्यम् ?'' इति कुतूहलेन पृष्टवती कमला ।

''वस्तुतः चन्द्रहारं कोऽपि न चोरितवान् एव । भवती यदा स्नानार्थं गतवती तदा अहम् एव हारं गोपितवान् आसम् । नगरं प्रति प्रत्यागमानन्तरम् अहं तम् आभरणस्य आपणे स्थापितवान् । तस्य आपणस्य स्वामी मम मित्रम् । सः हारं विक्रीतवान् इव, अहं क्रीतवान् इव अभिनयं कृतवन्तौ । मया गृहम् आधिरूपेण न निक्षिप्तम् अपि । अहम् ऋणम् अपि न कृतवान् । अतः एतेन धनेन भवती अपेक्षितम् आभरणं कारयतु'' इति शिवस्वामी मन्दहासेन कमलाम् उक्तवान् ।

क्षणं यावत् कमला आनन्दम् अनुभूतवती । अनन्तरं सा पत्युः हस्तद्वयं गृहीत्वा - ''पूर्वम् अहं मुग्धा, अहङ्कारिणी च आसम् । दैवेन दत्तं सौन्दर्यं वयोनुगुणम् इदानीम् अपि मम अस्ति एव । इदानीम् अहं शाटिकाम्, आभरणं वा न इच्छामि । एतेन धनेन नारिकेलवाटिकां क्रीणीमः । भवान् उद्योगं त्यक्त्वा वाणिज्यं करोतु । अग्रे धनस्य आवश्यकता अधिका भविष्यति । यतः इतःपरं वयं त्रयः भविष्यामः'' इति हसन्ती उक्तवती ।

कमलायां जातं महत् परिवर्तनं दृष्ट्वा शिवस्वामी तृप्त्या शिरः चालितवान् ।



# चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

विजितां शीर्षिकां एप्रिल्- १९९७ मासे प्रकटयिष्यामः ।



S.G. SESHAGIRI



S.G. SESHAGIRI

* उपरितनं चित्रद्वयं पश्यन्तु । * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा फेब्रवरी - २० तः पूर्वम् एव प्रेषयन्तु । * अनन्तरम् आगतां शीर्षिकां न परिशीलयिष्यामः । * स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति । * शीर्षिका समपत्रे (पोस्ट्-कार्ड्) एव लेखनीया । तत्र अन्यः विषयः न लेखनीयः । * अधोनिर्दिष्ट-सङ्केताय शीर्षिका प्रेषणीया ।

**चन्दमामा(संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, २ घट्टः, गिरिनगरम्, बेङ्गलूरु - ५६० ०८५**

---

'डिसेम्बर्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः -

प्रथमचित्रम् - **न वयं स्मः असहायाः ।**

द्वितीयचित्रम् - **आवां स्वः सहकारिणौ ।**

प्रेषकः - श्रीनन्द लक्ष्मण बापट, १५, युको ब्याङ्क कालोनी, पटवर्धनबाग, एरण्डवणा, पुणे - ४११ ००४


# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते)- रू. ७२-००

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -

**डाल्टन् एजन्सीस्**, चन्दमामा बिल्डिङ्गस्, वडपळनी, मद्रास् - ६०० ०२६

Printed by B.V. REDDI at Prasad Process private Ltd., 188, N.S.K. Salai, Madras - 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras - 600 026 (India), Controlling Editor: NAGI REDDI.